# श्रीअप्पयदीक्षितः

## शिवावतारः अद्वैतवेदान्ताचार्यश्च



मूलतः सः दक्षिणभारतीयः आसीत्। एषः ७२ वर्षाणि जीवितवान् इति शिवलीलार्णवग्रन्थे उल्लेखः वर्तते । संस्कृतव्याकरणस्य नव्य-शाखायाः सः जनकः मन्यते। सरलतया संस्कृतव्याकरणं विद्यार्थिभ्यः दातुं सः कानिचन महत्त्वपूर्णानि पुस्तकानि अपि अलखित्। एषः सर्वेषु अपि शास्त्रेषु ग्रन्थान् लिखितवान् । सर्वोऽपि ग्रन्थः प्रकरणग्रन्थत्वेन आदृतः ।

### जन्म

ईशवीये षोडशे शतके दक्षिणभारते, तुण्डीराख्ये जनपदे, श्रीकाञ्चीसंज्ञिकायाः नगर्याः समीपे अडयप्पलनामनि ग्रामे

**मृत्युः** चैत्रपूर्णिमा अडयप्पलनामनि ग्रामे

अन्यानि नामानि -अप्पय्यदीक्षितः, अप्पः, अप्पयदीक्षितः

**वृत्तिः**- दार्शनिक

कृते प्रसिद्धः व्याकरण-अलङ्कार-दर्शनादिशास्त्रपारङ्गतः

**भार्या-** मङ्गला

**अपत्यानि -** नमरकतवल्ली-मङ्गलाम्बिका-नामिके द्वे पुत्र्यौ, नीलकण्ठ-उमामहेश्वर-चन्द्रावतंस-नामकास्त्रयः पुत्राः

**पितरौ-** श्रीरङ्गराजाध्वरी (पिता)

**परिवारः-** आचार्यदीक्षितः उत आच्चानदीक्षितः (भ्राता), अज्ञातम् (भगिनी)

एतस्य वन्दनायै कश्चन श्लोकोऽपि प्रसिद्धः वर्तते।

**अरातो मित्रता यस्य समा दृष्टिर्हरौ हरे।**

**आजीवनं समातिष्ठत् तं वन्देऽप्पयदीक्षितम्॥**

## परिवारेतिहासः

पुरा दक्षिणभारते द्रविडदेशे तुण्डीराख्ये जनपदे श्रीकाञ्चीसंज्ञिकायाः नगर्याः समीपे अडयप्पलनामनि ग्रामे भारद्वाजवंशावतंसः प्राचार्यदीक्षितनामा द्विजवरो निवसति स्म। तदीयगुणगणाकृष्टचेताः परमब्रह्मण्यः शरण्यः दानपरम्पराभिश्च ह्रेपितपारिजातो विजयनगराधीश्वरः कृष्णराजस्तं विप्रर्षिं सदैव पूजयामास; तदीय शिरश्च तच्चरणारविन्दयोः सदैव भृङ्गायते स्म । तस्य प्राचार्यदीक्षितस्य द्वे पत्न्यौ बभूवतुःययोः ज्यायसी स्मार्ता कनीयसी च वैष्णवी आसीत् । ते द्वे अपि ; चतुरः चतुरः पुत्रान् जनयामासतुः । यद्यपि ते सर्वेऽपि अष्टौ भ्रातरः किन्तु कनीयस्यां धर्म ,अलौकिकाः आसन््मपत्न्यां जातेषु जातकेषु न केवलेन वयसैवमेधयापि च ज्येष्ठो ,तेजसा ,अपि तु यशसा , रङ्गराजाध्वरिनामा बालकस्तु विशिष्ट एवासीत् । ततोऽपक्रान्तेः कस्मिंश्चित्काले शाश्वतं धाम प्रपन्ने पितरि श्रीरङ्गराजाध्वरी धर्मधुरं वहन्

सर्वेषां शङ्करं श्रीशङ्कर मनसा वाचा कर्म्मणा समाराधयन् तदानीन्तनैश्च चिन्नबोम्मवेङ्कटगिरिप्रभूतिभिः राजभिः सम्पूज्यमानः -कालहस्ति- द्विजजनोचितषट्कर्मसु परायणो भूत्वा मनोरमया धर्मपरायणया तेजस्विन्या कामिन्या धर्मपत्न्या सह ससुखं समोदं निवसन्नासीत्। यदा च चत्वारिंशद्वर्षदेशीयोऽपि स स्वसुतमुखकमलावलोकनसुखम् अनुभवितुं न शशाकतदा चिन्तावितानाच्छन्नमनाः आत्मानं पितृणात् मोचयितुकामो , जायासहायः स्वीयं कुलदैवतं मार्गसहायेश्वरसंज्ञकं देवताविशेषं प्रीणयितुं पुरस्सरम् आराधितः अत -विश्वास-भक्ति-विरिञ्चिपूरीं जगाम । तत्र श्रद्धा एव च प्रीतिमापन्नो मार्गसहायेश्वरः आकाशवाणीं चकार यद्भो ' , श्रीचिदम्बराख्ये अधिष्ठाने विराजमानं श्रीनटराजम् !भक्तराज रङ्गराज 'तत्र त्वदीया पुत्रैषणा फलवती भविदिति। ,आराधय

श्रीरङ्गराजाध्वरी इमां गगनवाणीं निशम्य आशानन्दपयोनिधौ निमग्नो भवन् मार्गसहायेश्वरं भक्तिकृतज्ञताह्लादपुरस्सरं प्रणम्य ततः प्रस्थाय श्रीनटराजसमर्चनोत्सुकः सजायः स आश्वेव श्रीचिदम्बरं प्रति प्रतस्थे ; तत्रत्ये च परमपावने विरोधिसत्त्वोज्झितस्वीयमत्सरे सुपाच्यपरिपक्वफलैः

सुशोभिते तिल्लवने निवासमाकलय्य श्रीनटराजाराधनायां विगतान्यवृत्तिः स सुधीर्बभूव।

यदा मनोवाक्कर्मभिः अनारतं श्रीनटराजम् आराधयतो जायासखस्य तस्य पञ्चषाणि वर्षाणि व्यतीयुः तदैकदा तदीयभक्तिपूरप्रीतो भगवान् तत्रभवान् श्रीनटराजो नभोवाङ् माध्यमेन तं रङ्गराजाध्वरिणं जगाद -'भो द्विजेन्द्र ! अचिरेणैव कालेन मामकेन ;अलं तपसा । अहं त्वयि परमप्रसन्नोऽस्मि अंशेन पूरितौ द्वौ सुतौइति । 'एकां सुतां च तव भविष्यन्तीत्यत्र न संशयः ,

सुधासंकाशां ताम् अतिमोददायिनीं कामनापूरणीं नभोवाणीं श्रवणविषयीकृत्य श्रीरङ्गराजसुखसीमा एव नावशिष्यत । झटिति च श्रीनटराजम् अनुनीय गेहिनीसमेतो गृहाभिमुखं यावदेव चलितुकामो - पू-तावदेव श्रीनटराजः स्वकीय ,बभूवजकरूपनेपथ्यम् आकलय्य स्वाभिषेकपूतं मधुरफलरसमिश्रितं पयः सौवर्णचषके निधाय श्रीरङ्गराजाभिमुखम् आगत्य प्रोवाच -'भक्तशिरोमणेदेवदुर्लभमिदं पयः ! श्रीनटराजदयादृष्ट्या ध्रुवम् अचिरेण सन्ततित्रयी ;स्वधर्मपत्नीं पायय

इत्येवमुक्त्वा सश्रद्धं ग्रहीतुकामाय 'लप्स्यसेच श्रीरङ्गराजाय तत्पयश्चषकं दत्त्वा तस्मिन् पश्यत्येव अन्तरधात् । श्रीरङ्गराजोऽपि इमां सङ्घटनां दैवीं मन्यमानो हृदये हर्षातिरेकम् अनुभवन् तद् दिव्यं पयः स्वधर्मपत्नीम् अपाययत् । सापि गरीयस्या श्रद्धयादृढीयसा विश्वासेन च तमेव , श्रीनटराजमनुध्यायन्ती पपौ । तदनन्तरं श्रीनटराजं भूयोभूयः प्रणम्य हृष्टविश्वस्तमानसौ तौ स्वगेहं प्रति प्रातिष्ठाताम् ।



## जन्म

तत्पयः पानप्रभावेण श्रीरङ्गराजजायायां किमपि वाचामगोचरं विलक्षणं तेजो ददृशे । समक्षञ्च तेजस्विनीं तामालोक्य मुमुदे श्रीरङ्गराजः । प्रजाप्रतीत्या अखिलदोहदैः वरैः निरन्तरं प्रीतिमतीं चकार । सोऽनुक्षणं गर्भभरालसां निम्ननाभिचक्रां पाण्डुरवदनाम् उन्नतनितम्बबिम्बां पीनश्रोणिपयोधरां मन्दगमनां गर्भज्योतिष्मतीं स्वपत्नीं निभालं निभालं श्रीनटराजचरणारविन्दयुगलं कृतज्ञतापूर्वकं ध्यायं ध्यायं च सुतमुखकमलावलोकनप्रतीक्षापरो बभूव । तेषु वासरेषु श्रीरङ्गराजपत्नी रत्नगर्भा मौक्तेयघटी इव चकाशे।

एवं गच्छति काले परिपूर्णं च गर्भपुष्टिकाले ईशवीये षोडशे शतके सकलगुणगणवरिष्ठे महिष्ठे मुहूर्त्ते श्रीरङ्गराजाध्वरिधर्मपत्नीवामकुक्षिसागरात् एकम् अतिरमणीयं सर्वजनलोचनानन्ददायकं भासुरं विलक्षणकान्तिसम्पन्नं पुत्ररत्नं जज्ञे । जातकेऽस्मिन् जाते सत्येव जगद् वीतापद् संजातम् । सज्जनास्तु सन्तोषमेवकिन्तु दुर्जनास्तु अपूर्वमेव सन्तोषं लेभिरे । षडङ्गा वेदाः , सखायो एव श्रीरङ्गराजाध्वरिणः स्वीयां स्थितिं द्रढीयसी मेनिरे । सर्वे बालकजन्ममहोत्सवं महता संभारेण चक्रिरे। बालोऽपि मातृगर्भाद् विनिस्सृतः तत्परिचयाधिक्यात् पुनरपि मनःसु एव मनीषिणां प्रविशन् इव दिदीपे । श्रीरङ्गराजाध्बरिणश्चिरकालसञ्चितो मनोरथस्तदानीं पूर्त्तिं जगाम । सुतमुखकमलं घ्रायं घ्रायं मनोमिलिन्दो मुमुदे तदीयः। बालके विलक्षणं तेजोमण्डलं दर्शं दर्शं तस्मिन् तदीया श्रीनटराजांशबुद्धिः बभूव ।

## नामकरणम्

समाजे सर्वत्र 'अप्पयदीक्षितः' इत्येन नाम्ना एव तस्य प्रसिद्धिः वर्त्तते। किन्तु तदीयं वास्तविकं श्रीपितृचरणकृतं समन्त्रकं नाम तु ‘विनायकसुब्रह्मण्यः’ इत्येवासीत् । यथा साम्मतं दृश्यते लोके यद् मातापितृभ्रातृस्वसृप्रभृतयो ज्यायांसो जनाः वात्सल्यातिरेकेण शिशुं लालितक-नाम्ना आह्वयन्ति, तथैव पुरापि श्रीरङ्गराजाध्वरी स्नेहांतिशयेन एनं श्रीदीक्षितमहोदयम् ‘अप्प’ इति नाम्ना एव आह्वातुम् आरेभे । अन्येऽपि तदीयाः प्रेमिणः एनेनैव नाम्ना एतस्मै शैशवे प्राह्वातुमभ्यस्ता बभूवुः ।

यद्यपि शैशवे अस्य महोदयस्य ,इति नाम निरर्थकमेव आसीत् 'अप्प' किन्तु अग्रे जीवने अयम् एकादश्यादिषु व्रतदिनेषु केवलाः अपः एव पीत्वा अस्य नाम्नश्चारितार्थमपि चकार । यदा च अप्पशब्दो व्युत्पत्तिम् आगतस्तदा तु एतस्य इदमेव नामधेयं लोकेषु ख्यातिमाजगाम। न केवलम् अपितु एतन्नाम्ना सहैव ,इत्येव तदीयं नाम प्रचलितम् 'अप्प‘ शब्दावपि एतदीय संज्ञात्वं लेभाते ।-अप्पय्य-ईषद् विकारमापन्नौ अप्पय अप्पय्येति त्रयोऽपि स्नेहोक्ताः शब्दाः -अप्पय-अप्प , एवं च इमे एतदीयनामगौरवं प्रापुः ।

यद्यपि अप्पयशब्दापेक्षया-अप्पय्य- अप्पशब्द एव शुद्धोऽस्ति ; ,श्रीदीक्षितमहोदयेनापि आत्मनः कृते अस्य नाम्नः प्रयोगो विहितोऽस्ति इति तदीयम्  'विनायकसुब्रह्मण्य‘ इति नाम 'अप्पदीक्षित ,तथापि तदीयम् ’अप्पयदीक्षितः‘ अपरनाम इव लोकेऽनुच्यमानमेव लभ्यते। लोके तु श्चेति उभे एव नामनी आ 'अप्पय्यदीक्षित‘धिक्येन प्रचारमापतुः।

## बाल्यम्

श्रीमदप्पयदीक्षितः शैशवे स्वीयविलक्षणया मुखमण्डलाभया परिस्फुरन्त्या देहकान्त्या, शिवनिष्ठया च बालक्रीडया स्वीयमातापितरौ भृशं प्रीणयामास । कदाचिद् अनिमित्तैः कदाचिद् सनिमित्तैः मन्दस्मितैः मञ्जुहासैर्वा आलक्ष्यदन्तमुकुलम्, अव्यक्तवर्णरमणीयवचःप्रवृत्तिम्, अङ्काश्रयप्रणयवन्तम् अमुम् अति रमणीयम्, ईषत्कुञ्चितकेशं मनोहरवेशं विशालभालं बालं निभालं तल्लालनपालनपरायणः सपत्नीकः श्रीरङ्गराजाध्वरी आत्मानं धन्यं मन्यमानो ब्रह्मानन्दसागरे इव पुत्रानन्दपयोनिधौ निमग्नो जागतिककार्यान्तरं नक्तन्दिवभावञ्च विसस्मर ।

## अनुजोऽनुजा च

एवम् अपक्रामत्सु कतिषुचिद् वासरेषु श्रीनटराजाशीर्वादानुसारेण एव श्रीरङ्गराजाध्वरी अपरं पुत्रं, कान्तकलेवरां पुत्रीं च लेभे। द्वितीयपुत्रस्य नामधेयम् 'आचार्यदीक्षितः' इति आसीत् । किन्तु अशिक्षिता भूयांसो जनाः आचार्यशब्दोच्चारणासामर्थ्यात् 'आच्चानदीक्षित' नाम्ना एव तं सम्बोधयामासुः । तदीयपुत्र्याः नामधेयं तु तदीयदेहेन सहैव कालेन कवलीकृतमस्तीति खेदविषयः । एवं हि श्रूयते दाक्षिणात्येषु यद् तस्याः विवाहः वाधूलगोत्रोद्भवेन कुलीनेन शास्त्रप्रवीणेन केनचिद् द्विजकुमारेण सहाभूत् इति।

## शिक्षादीक्षे

श्रीमदप्पयदीक्षितमहोदयस्य प्रारम्भिकी शिक्षा तदीयपितृचरणच्छायायामेव अभूत् । एतदीयेन पित्रा श्रीरङ्गराजाध्वरिणा एव अस्मै मातृकाक्षराणि पाठितान्यासन्। यदा अयं वर्णपरिचये शब्दपरिचये तदर्थज्ञाने च कुशलो बभूव, तदा श्रीरङ्गराजाध्वरी अमुं स्वपुत्रं समीपवर्तिनि मुल्लङ्गनामनि ग्रामे

निवासिनो मनीषिणो विद्वत्कविकुलकमलरवेः श्रीगुरुरामकवेश्चरणयोः पाठनाय समर्पयामास ।

श्रीगुरुरामकविना महता स्नेहेनभूयसा वात्सल्येन च अयं पाठितः । , अयं च गुरुं विना खिन्नो ,गुरुशिष्ययोः परमा प्रीतिरासीत् । गुरुः इमं विना भवति स्म । श्रीगुरुरामकवेः पाठनशैली अतीव छात्रप्रिया आसीत् । सोऽतिसरलतया एव गभीरतममपि ग्रन्थाशयं बोधयितुं पटीयानासीत्।

इतश्च श्रीमदप्पयदीक्षितस्य तु कथा एव विलक्षणा आसीत्। इतीयमुक्तिः अस्मिन् प्रक्षरशश्चरितार्था 'अनुक्तमप्यूहति पण्डितो जनः' भवति स्म । मेधाविनाम् अन्तेवासिनां वरोऽयं दीक्षितमहोदयो गुरुमुखारविन्दात् स्त्रवत्काव्यकौशलसारसर्वस्वं ग्रन्थाशयं झटित्येव आत्मसादकार्षीत् । परिणामोऽयमभूत् ,यद एतस्य धारणाशक्तिः , दर्श परमप्रीतमनाः अनुपमा गुरुभक्तिः च दर्श ,ग्राहिकाशक्ति श्रीगुरुरामकविः निखिलशास्त्रग्रन्थग्रन्थिभेदनपुरस्सरमेनं पुत्रीयन् अल्पीयसा एव अनेहसा समस्तमेव भूसुरोचितं भासुरम् अनश्वरं

विसृत्वरं सारस्वतं वैभवं प्रहीणदोषाय जितेन्द्रियाय अस्मै श्रीदीक्षितेन्द्राय हृदगताशीराशिसमन्वितं समोदं प्रदद ।

गुरुकृपापीयूषपाकोद्भवं सारस्वतं वैभवं समुपलभ्य श्रीदीक्षितः काव्यालङ्कारमर्मनैपुणीं समुपेयिवान्-काव्यकाननपञ्चाननत्वं च साहित्य , सुधाऽऽस्वादपटीयस्त्वं च लेभे । सहैव काव्यकलामाधुर्य्येण सः सकलदेशभाषाव्यवहारप्रावीण्यं शास्त्रार्थमल्लशालाधुरीणत्वञ्चापि समवाप। श्रीगुरुरामकविस्तु सागरोच्छलद्वीचीप्रचारैरिव एतदीयैः अकाट्यवाचां प्रचारैः वादिमुखमुद्रणामोघैः अभेद्यैस्तर्ककूटैश्च स्वीयहृदयाभ्यन्तरे अमान्तममन्दमानन्दसन्दोहमनुभवन् तादृशशिष्यलाभेन जगतो निखिलमपि लक्ष्मीवैभवं तृणाय मन्यमान आसीत् ।

एवंरीत्या यदा श्रीमदप्पयदीक्षितः गुरुरामकविकृपापारावारोपलब्धज्ञानरत्नराशिकान्तिकान्तकलेवरः , ज्ञानमदमत्तविपश्चिविपश्चिन्मातङ्गोत्तुङ्ग-भालविदलनपटुकेसरिकिशोरो च बभूवतदा हर्षगौरवातिशयात् तस्य पिता श्रीरङ्गराजाध्वरी महता आदरेण ,

महत्या च श्रद्धया श्रीगुरुरामकविं यथाशक्तिः अदत्तया सुलक्षणया दक्षिणया सम्पूज्य पाठनकलाकोविदं तं मुहुर्मुहुः प्रशशंस।

तदनन्तरं श्रीरङ्गराजाध्वरी मौहूर्त्तिकैरुपदिष्टे एकस्मिन् शुभे मुहूर्ते ज्येष्ठात्मजं श्रीदीक्षितं श्रौतेन विधिना उपनीय शिक्षा-व्याकरण- कल्प-निरुक्तच्छन्दोयुतां त्रयीं पाठयितुमारेभे। श्रीदीक्षितमहोदयेन -ज्यौतिष- श्रीगुरुचरणसकाशादिवश्रीपितृचरणसकाशादेव समस्तं -निखिलजातञ्च ,वैदिकवाङ्गमयवैभवं समस्तञ्च औपनिषदं तत्त्वं स्मार्तमर्थजातं महता प्रौढिम्ना गरिम्णा च साकमलम्भि। श्रीदीक्षितस्य मनोभूमौ स्वीयपितृचरणकमलयोः कृते परमोत्कृष्टा गुरुभावना आसीत् ।

पितृत्वञ्च गुरुत्वञ्च उभयं मिलित्वा कमपिविलक्षणमेव श्रद्धातिशयमुत्पादयामास तच्चित्ते। वस्तुतस्तु श्रीदीक्षितमहोदयेन श्रीरङ्गराजाध्वरिणि पितृत्वापेक्षया गुरुत्वमेव आधिक्येन प्रक्षितम् । तेन सगौरवं स्वीयग्रन्थेषु स्वीयपितृचरणयोः एव स्वीयनिर्भ्रान्तगुरुत्वभावः प्रकटीकृतोऽस्ति । यद्यपि एतादृशेषु सर्वेषु एव स्थलेषु पितृत्वोपरि गुरुत्वस्य विजयो दरीदृश्यतेतथापि उभयविधभावनायाः मञ्जुलं समन्वयं ,

कृत्वा श्रीदीक्षितमहोदयेन आदर्शपुत्रादर्शशिष्ययोः उत्कृष्टतमा भाजनताधिगतास्तीति।

स्वकीयपितृचरण-श्रीरङ्गराजाध्वरिसकाशात् समस्त-शास्त्रार्थ-विचारपाटवं गभीरतमस्यापि विषयस्य सरलीकरणकलाकौशलम्अविनीतस्यापि , विपक्षविपश्चितः तन्मतनिरसनपूर्वकं विनीतीकरणप्रावीण्यं च साधु समासाद्य पञ्चदशवर्षदेशीय एव श्रीदीक्षितमहोदयः स्वीवैदुषीयशोमाध्यमेन सर्वत्रैव प्रथितनामा अभीष्टदर्शनश्च बभूव । श्रीरङ्गराजाध्वरी अपि श्रावं श्रावं स्वपुत्रप्रकाण्डपाण्डित्यं दर्शं दर्शं च तद्यशश्चारुचन्द्रिकावितानं मोक्षाभिलाषमपि तत्याज । शिष्यीभूतपुत्रोत्कर्षे एव आत्मोत्कर्षं मन्यमानः स परां प्रीतिं जगाम ।

## पितृविरहः-

सपुत्रस्य श्रीरङ्गराजाध्वरिणो वैदुष्ययशोगुणान् श्रावं श्रावं प्राकृष्टचेताः सचेताः वेलूरपुराधीशः श्रीचिन्नबोम्मः स्वीयसभायां सादरं तमानिनाय । बहूनि दिनानि तेन सत्क्रियमाणः सपुत्रो रङ्गराजाध्वरी तत्र निवासं चकार

। एकदा स्वकीयमन्तकालमालक्ष्य श्रीरङ्गराजो भूपतिम् आपृच्छ्य सपरिवारः पुनः स्वीयम् अडयप्पलं ग्रामं गतः । तत्र गतवतोऽस्य अनेकानि दिनानि न भूतानि आसन् यद् एकस्मिन् दिने स्वकीयौ उभावपि (अप्पय-आच्चानदीक्षितौ) पुत्रौ प्राहूय निर्मलस्य विनम्रस्य च जीवनस्य पाठं साधु पाठयित्वा भगवन्तं श्रीजगदीश्वरं शङ्करं संस्मरन् नश्वरं पाञ्चभौतिकं देहं परित्यज्य परब्रह्मणि लीनो बभूव ।

तत्क्षणं श्रीमदप्पयदीक्षिते असामयिक इवअतर्कित इव ,अज्ञात इव , अशनिपातो भूतवान् आसीत्। सुशिक्षितोऽपि दीक्षितोऽपि अप्पयदीक्षितः प्रेष्ठगुरुत्ववत् पितृविरहानलज्वालाजालावलिह्यमानावयवो भवन्नासीत् । धैर्यधारिधौरेयोऽपि सः सहजामपि स्वीयां धीरताम् अपहाय ईषत्कालाय किंकर्तव्यविमूढो बभूव ।यतो हि तदीयः कृपावत्सलः केवलः पिता एव न हिअपि तु दयासागरः करुणावरुणालयो निर्भ्रान्तशास्त्रोपदेष्टा , भवाटवीपारनेता विनेता गुरुरपि प्रणष्टो भूतवानासीत् । अत एव तस्य दुःखसिन्धुर्द्विगुणितो बभूव । ततः अपक्रामत्सु कतिषुचित् क्षीणक्षणेषु खेदक्षणेषु प्राप्तज्ञानराशिप्रकाशपुञ्जः कथङ्कथमपि न्युब्जीकृते

शोकनिबिडतिमिरे सानुजः श्रीमदप्पयदीक्षितः गुरुत्वपूर्णपितृचरणानां सर्वा एव और्ध्वदैहिकीः क्रियाः यथाविधिः सम्पादयामास ।

श्रीरङ्गराजाध्वरिनिर्वाणं निशम्य सर्वत्रैव दुःखलहर्यो व्यापुः। सर्वे विद्वांसः तदीयेन आत्यन्तिकेन विरहेण दुःखिता बभूवुः। श्रीचिन्नबोम्मभूपालप्रभृतयो राजानोऽपि दुःखसागरे निममज्जुः। श्रीरङ्गराजाध्वरिणः सदाचारशीलतानम्रता विद्वत्ता च समेषामेव हृदयानि , हृतवत्य आसन् । अतस्तद्विरहः सर्वानेव रोदयामास । कालो गच्छन्नासीत्। श्रीमदप्पयदीक्षितस्य चित्तपटले स्वकीयपितृपादगुरुपादश्रीरङ्गराजाध्वरिणः एव नानाभावमुद्रावत्यो मूर्त्तयो रचिताः विनष्टाश्च भवन्त्यः आसन् । संसारे स आत्मानमेकाकिनमेव मन्तुमारब्धवानासीत् । पुस्तकस्य पृष्ठेषु वाक्येषु शब्देषु अक्षरेषु तेन तदीया एव छविः दृशयमानासीत् । क्षणमात्रमपि सा मूर्तिः तन्नयनाभ्यां नापसरति स्म । प्रायेण तदीये चक्षुषी शुष्के एव अभवताम्किन्तु भावविभोरतया कदाचित् ताभ्यामेव , शास्त्रपारदृश्वभ्यां नेत्राभ्याम् अविरला अश्रुधारापि वोढुमारभत । तदीयां इतरे च ,तामभूतपूर्वां दशां दर्शं दर्शं तदनुजः आच्चानदीक्षितः प्रतिवेशनिवासिनोऽपि दूनाअप्रभूवन् । परन्तु अयं प्रेष्ठगुरुपितृविरहः तदीये

जीवने अनुपमं परिपाकम् अद्वितीयञ्च जगद्दर्शनमप्यानीतवान् । अथ तस्य शोकसागरस्य नामापि नावशिष्टमासीत् । अपि तु तत्स्थाने आसीदेका द्रढीयसी गवेषणापूर्णा च तत्त्वनिष्ठा निर्भया भवानुभूतिः । तदीये पाण्डित्ये वैदुष्ये च विलक्षणं तेजो दृश्यमानं बभूव । जगतो या अनित्यता प्राक् शास्त्रेष्वेव लब्धासीत्तामक्षिलक्ष्यीविधाय तदीयं ज्ञानमनुभूतिपरायणं , बभूव । अत एव तदीयवाक्षु द्रढिम्ना पदमदीयत।

## राजसभा

वेलूरपुराधीशः श्रीचिन्नबोम्मो रङ्गराजाध्वरिशून्यां स्वीयां सभां दृष्ट्वा तत्स्थाने तदीयं भव्यं पुत्रं श्रीमदप्पयदीक्षितं पूजापुरस्सरमभिषिषेच । श्रीदीक्षितेन स्वीयनम्रेण वैदुष्येण सकला एव सभ्याः वशीकृताः। राजापि तदीयेन वाग्वैभवेन अतितरां प्रभावितो बभूव । किन्तु तस्यां सभायां ताताचार्यनामा एको विदग्धो राज्ञः कृपाभाजनत्वात् प्रधानामात्यपदासीनोऽत एव नितरां पदमदमत्तम् आसीत्। तस्य श्रीदीक्षितपितृचरणैः श्रीरङ्गराजाध्वरिभिः सह प्रवृद्धं वैरमासीत् । सः स्वभावेन वैष्णवः आसीत्; किन्तु शिवाय भृशमद्रुह्यत। श्रीदीक्षिताः

तदीयपितरः श्रीरङ्गराजाध्वरिणश्च परममाहेश्वराः सन्तोऽपि श्रीविष्णुं कदाचिदपि नाभिद्रुह्यन्ति स्म । संसार त्यक्तवत्सु श्रीरङ्गराजाध्वरिषु स ताताचार्यः श्रीदीक्षितं स्वप्रतिद्वन्द्विनं मन्यमानोऽस्मै भृशमीर्ष्यति स्म ।

एकदा तेन ताताचार्येण श्रीदीक्षितमतनिरासाय शैवमतखण्डने स्वीयं समस्तं वाग्बलं प्रकटीकृतम्। किन्तु विनीतः अपि श्रीदीक्षितमहोदयः श्रीशिवाबहेलामूलकं तदीयमिदमौद्धत्यं सोढुम् अशक्नुवान् स्वीयैः अकाष्ट्यैः तर्कैःउद्दामैः नदीवेगोपमैश्च ,दुर्धर्षैः सिद्धान्तपक्षैः , प्रमाणप्रवाहैः शैवदर्शनस्य लोकमङ्गलमूलकतां साटोपं साधयामासुः । श्रीदीक्षितमहोदयस्य प्रवचनैः समस्तापि सभा चमत्कृता सती अभीक्ष्णं साधुवादान् कथयितुमारेभे। निरस्तवैदुष्यःत्रपाभिमूतश्च ताताचार्यः , पूर्वतोऽपि द्विगुणतरं वैरं श्रीदीक्षिते बबन्ध ।

इतरे राजानः तदीयं तं तथाविधं वाणीविलासं श्रावं श्रावं श्रीदीक्षितान् आहूय पूजयितुमारेभिरे । एवं तदीयं यशो दिक्षु विदिक्षु प्रसरद् आसीत् । महोयसा यशसा समं तदीया वपुष्कान्तिरपि क्षणे क्षणे हृद्यताम् ,

अनवद्यताञ्च समुपेयुषी कामपि वाचामगोचरां नयनमहोत्सवीभूतां रमणीरमणीयामद्वितीयामभिख्यां लभमानासीत् ।

## गार्हस्थ्ये प्रवेशः

श्रीमदप्पयदीक्षितस्य विवाहः तुण्डीरा-आख्ये एव जनपदे शरसमुद्र-नामकग्राम-निवासिनः अग्निहोत्रिणो द्विजवंशावतंसस्य रत्नखेटोपाधिधरस्य श्रीयुतस्य श्रीनिवासदीक्षितस्य सुशीलया विनयवत्या विद्यावत्या रूपवत्या कन्याया समं बभूव; यस्याः पितृकृतं नाम 'मङगला' 'मङ्गलाम्बा' वा आसीत् । किन्तु व्यवहारे जनाः तस्याः नाम 'आच्चालुः' इत्येव गृह्णन्ति स्म। श्रीदीक्षितमहोदयोऽपि तस्या अनेन नाम्ना अपरिचितः आसीत् । तेन तदीयमिदं नाम तदा ज्ञातं यदा स एकदा श्वशुरालयं जगाम, तत्रत्याश्च केचन जना इमं दृष्ट्वा शनैः शनैः अन्योऽन्यं कथयितुमारभन्त 'यदयमेव विलक्षणो विचक्षणः । आच्चालोः पतिरस्ति' इति । तेषां वाचो निशम्य अयं ज्ञातुं प्राभवत् यद्, तस्य धर्मपत्न्याः एकं ग्राम्यं नाम 'आच्चालुः' इत्यप्यस्ति । केचन तस्याः नाम 'तोताराम्बा' इति मन्यन्ते, तां च काञ्चीपुरवासिनीं स्वीकुर्वन्ति ।

विद्याभिमानान्वितस्य लब्धराजाश्रयस्य विपश्चितामपश्चिमस्य श्रीकामाक्षीकृपाकटाक्षभाजनस्य श्रीश्रीनिवासदीक्षितस्य तादृशसुयोग्यया भव्यया हृद्यया अनवद्यया सुविद्यया बालिकया सहास्य विवाहे दैवी प्रेरणा एव कार्यमकार्षीत् । यतो हि तदीयविवाहसंघटना महती विलक्षणा विस्मयावहा चास्तिवृद्धोऽपि वयसा - सा चेत्थम् अनुश्रूयते ; विद्याभ्यासशास्त्रार्थमल्लशालासम्पुष्टः श्रीश्रीनिवासाध्वरिनामा प्रकाण्डपण्डितः आर्यावर्तपूनाराष्ट्राधिपतेः विद्वत्प्रियस्य - श्रीचन्द्रशेखरभूमिपालस्य सभामणिरासीत् । स पण्डितः कामाक्षीदेव्याः भक्तः आसीत् । देवी तस्मिन् प्रसन्ना भूत्वा तदीयान् साध्यान् असाध्यान् अशेषानः् अपि अभिलाषान् साधयति स्म । तया शास्त्रार्थो मानवविजयाय वरोऽप्यस्मै दत्त आसीत् । अतः श्रीश्रीनिवासाध्वरी सर्वान् अपि उद्भटान् पण्डितभटान् शास्त्रार्थसमरभूमौ तृणायापि न मन्यते स्म ।

इतश्च श्रीमदप्पयदीक्षितस्यापि वैदुष्ययशोवैजयन्ती सर्वेषामेव विदुषां श्रवणाकाशमूमौ दोधूयमानासीत् । बाल्ये लोचनातिथीभूतस्य भव्यस्यास्य

तरुणिमानं लभमानस्य श्रीमदप्पयदीक्षितस्य विसृत्वरं वैदुष्ययशः श्रावं श्रावं श्रीश्रीनिवासाध्वरिणा तेन समं शास्त्रार्थसमरं विधातुं मनश्चक्रे ।

एकदा श्री चन्द्रशेखरभूपालेन श्रीमदप्पयदीक्षितस्य पाण्डित्यचर्चा चालितातदैव श्रीनिवासाध्वरी शास्त्रार्थे श्रीदीक्षितं विनेतुं भूपानुमतो , भूत्वा काञ्चीपुरीमागत्य तत्र कृतावासां श्रीकामाक्षीं प्रसादयितुमनुष्ठानं ! कर्तुमारेभे । तेन प्रीता देवौ प्रत्यक्षमाह श्रीनिवासाध्वरिणं यद् भो वत्स त्वयि भृशं ,व्रियताम् वरो प्रीतिमती अस्मिइति । श्रीश्रीनिवासेन साह्लादं ' सत्वरञ्च समुदीयमानस्य विपश्चिता वरेण्यस्य जिज्ञासुजनशरण्यस्य समराङ्गाणे विजयप्राप्तिः याचिता ।-श्रीमदप्पयदीक्षितस्योपरि शास्त्रार्थ

याच्ञामिमां निशम्य वात्सल्यपयोधितरङ्गायिताक्षी श्रीकामाक्षी श्रीनिवासाध्वरिणं परिबोधयन्ती प्राह अलमनेन मनोरथेन । यतो ! वत्स-हि श्रीमदप्पयदीक्षितो मनुजरूपः साक्षात् श्रीशिव एव वरीवृत्यते । तस्मात् तथैव स ,तेन सह नास्ति श्रेयांस्तव शास्त्रार्थसमरः । यथा त्वं मम कृते स्थः तस्मात् युवयोः श्रीशिवस्य कृते । यस्माद् युवां तुल्यमानभाजौ

शास्त्रसमरो न शोभाधायकोऽस्ति । अहं तु इदमपि अनुजाने त्वाम् यत्त्वं स्वीयां सुलक्षणां मङ्गलाम्बिकां कन्यकां सर्वगुणसम्पन्नाय एतस्मै श्रीमदप्पयदीक्षिताय एव तदीयभार्यात्वेन देहि । अयं संयोगः रत्नं ' चरितार्थयिष्यतीति म इति कालिदासीयामुक्ति 'समागच्छतु काञ्चनेन े मतिः। श्रीदेव्यास्तत्तादृशं प्रेमनिर्भरं वचो निशम्य प्रीतमनाः ' इति शिरोविनमनपुरस्सरमुक्त्वा 'यथाऽऽज्ञापयति माता' श्रीनिवासाध्वरी देव्यादेशं स्वीचकार। देवी श्रीकामाक्षी अपि विविधं तं परितोष्य अन्तरधात् ।

इतश्चैकदा स्वप्ने कामाक्षीजानिना श्रीमदेकाम्रनाथेन श्रीदीक्षितः प्रबोधितो यद् ,'गच्छ काञ्चीपुरींतत्र विपश्चिदपश्चिमः श्रीरत्नखेटाध्वरी त्वया सह , इति । 'सर्वगुणसम्पन्नायाः स्वीयकन्यायाः विवाहं विधास्यति श्रीमदप्पयदीक्षितस्तु अमुं स्वप्नं भगवदादेशं मत्वा तत्प्रेरितान्तःकरणः सोपकरणः सशिष्यगणः काञ्चीं गत्वा कस्मिंश्चित्स्थाने निवस्तुमारेभे । यदा श्रीश्रीनिवासाध्वरिणा इदं ज्ञातं यद् श्रीमदप्पयदीक्षितोऽपि शिष्यैः समेतः काञ्चीमेव अधिवसन्नस्तितदा तु स एकस्मिन्नहनि , श्रीकामाक्षीनिदेशं मनसि निधाय जामातृत्वेन तं वरीतुकामस्तत्र

तदीयावासे समाजगाम । श्ीमदप्पयदीक्षितेन तदीयं हार्दिकं स्वागतं प्रीतिपुरस्सरमकारि । लब्धसपर्यः श्रीश्रीनिवासः श्रीमदप्पयदीक्षितवैदुषीं प्रशंसन् तस्मै स्वीयमङ्गलाख्यकन्यकादानरूपमभिलाष प्रकटीचकार।

श्रीमदप्पयदीक्षितोऽपि साधुवादपुरस्सरं तदीयं वाचां वैभवं श्रीकामाक्षीकृपाकटाक्षभाजनतां च वर्णयन् कृतज्ञतापूर्वकं तदीयं प्रस्तावमङ्गीचकारइदमपि च स्मयमानः स्पष्टीचकार यद् ममोपरि , तत्र ,विजयावाप्तिकामनया भवद्भिः श्रीकामाक्षीपादपद्मवन्दना विहितास्ति प्रत्यक्षीभूतया तया देव्या एव भवद्भ्यः इत्थमादेशो दत्तोऽस्ति येन महान्तोऽपि भवन्तः स्वीयपुत्र्याः मादृशेन सह विवाहं कर्तुमुद्यता जाताः सन्ति । परमस्तु नाम किमपियस्य भवादृशाः ;अहन्त्वात्मानं धन्यं मन्ये ; हितैषिणः सम्बन्धिनश्च बुभूषन्तीत्येवं परस्परं हसन्तौ हासयन्तौ च श्रीश्रीनिवासाध्वरिणौ उभावेव विवाहदिननिश्चयमपि -श्रीमदप्पयदीक्षित चक्रतुः ।

ततः समायाते तस्मिन् सर्वगुणोपेते शुभे दिने श्रीरत्नखेटाध्वरिणा श्रीश्रीनिवासेन स्वीयं निवासस्थानं तथा सज्जीकारितं यथा तद् इन्द्रगुरोः

बृहस्पतेरपि मन्दिरमतिशयानमासीत् । मुक्तामरकतमयीषु भित्तिषु स्थाने - स्थाने खचिता माङ्गलिक्सूक्तिरूपाः मणिप्रदीपा न केवलं तच्चारुतामेव , इति वाचमप्यर्थवतीं कुर्वन्त आसन् 'यत्र द्वयं श्रीश्च सरस्वती च' अपि तु अपितु आतोरणद्वारात् स्थाने स्थाने संस्थापितैः ,। सर्वत्र भवने एव न हि -गङ्गाद्यापगापयापूरित-परिमलाह्लादि-कस्तूरी-केशरोशीर काञ्चनकलशसान्निध्यानेकगुणीभूतपवित्रताशोभैः निजाभया जितपारिजातप्रभैः कर्पूरागुरुगन्धमिश्रैः परिलम्बमानहरितदूर्वाङ्कुरव्यवस्थितैः कदलीस्तम्भैः परिवर्धमानशोभाः मध्ये मध्ये नवमालिकाकदम्बादिकुसुमावलीविभूषिताः -केतकी-माधवी-वीथीमुभयतो विलसन्त्यो मन्दमन्दमरुदुल्लसद्रसालाशोककिसलयपताकाः लोकानां चक्षुंषि मनांसि च हरन्तिस्म ।

तत्र वीथ्यां कुसुमबाहुल्येन वसुमती सुमवती प्रतीयमानासीत् । नासिका अमितसन्तोषदायिभिः इत्रपटलैः हृद्यता समेधमानाऽऽसीत् । सर्वथा पवित्रे ,चेतोहरे विविधरत्नभूषाविभूषिते ,वरवधूपयोगिकुसुमकौशेयपरिवृतकाञ्चनपीठद्वयपरिवर्धितचारुत्वे मनोरमणीयरमणीगीतिस्वरलहरीरमणीये परमपावनश्रुतिसुखदश्रुतिनिनदे ,

समलङ्कृतैः मङ्गलवेषैः विवाहमहोत्सवालोकनाभिलाषागतैः सपर्योत्सुकैर्वा सुरैरिव भूसुरैः लसिते विवाहमण्डपे विधिपुरस्सरं श्रीश्रीनिवासः तेजस्वितया ,ज्ञानदीप्त्या सरस्वतीमिव ,देहकान्त्या लक्ष्मीमिव शर्वाणीभिव स्वीयां मङ्गलानामिकां कन्यकां भूषया बिष्णवे इवमेधया , ब्रह्मणे इव तेजसा च शवयि इव विपश्चिदपश्चिमाय श्रीमदपपय दीक्षिताय भार्यात्वेन समर्पयामास ।

तदानीं प्रबोधवतीनां युवतीनां ललितेन सुगीतेन तेन गीतेनधीजुषां , माङ्गल्यशंसितूर्यमृदङ्गादिविविधवा ,श्रुतिजुषां विदुषां ब्रह्मघोषेणद्यरवेण , सस्पृहं पश्यन्तीनां किशोरीणाम् अभिनवदम्पतिसंयोगप्रशंसापरकसस्मितवचोमाधुर्येण समस्तमेव तत्रत्यं पक्वं सुभोज्यं भोजनं सुवर्णं -वातावरणमाह्लादमयं बभूव। षट्पञ्चाशत्प्रकार अपि तु ब्राह्मणा अपि ,सुवर्णं च प्रदत्तं यथा न केवलाः कदलीवृक्षा एव अपर्णा बभूवुः। श्रीश्रीनिवासाध्वरी अपि विबुधतुल्येन वैभवेन समस्ताभिश्च शुभाशंसाभिः समेतां स्वीयां हृद्यानवद्यां धन्यां कन्यां समर्प्य श्रीदीक्षितेन्द्राय परां प्रीतिमापेदे ।

एवं सानन्दं सोल्लासं सम्पन्ने विवाहमहोत्सवे परस्परं प्रवर्धमानेन स्नेहातिरेकेण अन्यानपि कतिपयान् वासरान् काञ्चीमध्युष्य प्रीतिपुरस्सरम् अन्योन्यविसृष्टौ श्रीश्रीनिवासश्रीमदप्पयदीक्षितौ स्वीयां स्वीयां निवासभूमिं प्रति जग्मतुः । असह्यमपि पितृवियोगं स्पृहणीयपतिसंयोगेन शमयन्ती मङ्गला श्रीमदप्पयदीक्षितेन समं सानन्दं वैदुष्यपुरस्सरं तारुण्यसुखमनुभवितुमारेभे । एवमन्योन्यवैदुषीप्रीतौ इतरेतरतारुण्योपभोगलाभतृप्तौ अन्यजनादर्शभूतौ तौ दम्पती कमपि वाचामगोचरं पाण्डित्यपूरितजीवनामन्दानन्दसन्दोहम् -लालित्यलसित- अनुभवन्तौ भवानीजानिमाराधयन्तौ मखैः मखेश्वरं प्रीणयन्तौ दुर्लभं मानवदेहलाभ सफलीकर्त्तुमारेभाते।

## सन्ततयः

पण्डितकुलकमलदिवाकरस्य श्रीमदप्पयदीक्षितस्य मरकतवल्ली-मङ्गलाम्बिका-नामिके द्वे पुत्र्यौ, नीलकण्ठ-उमामहेश्वर-चन्द्रावतंस-नामकास्त्रयः पुत्राः च आसन् । श्रीदीक्षितेन एतेषां सर्वेषामेव अपत्यानां

यथाविधि समयोचिताः संस्काराः कृताः; स्वयमेव च दीक्षापि दत्ता । अत एव ते सर्वे बालकाः मेधया, दिनचर्यया साधुर्यया च स्वपितरमेव अनुकुर्वन्तो नयनानन्दहेतवो बभूवुः । तेषु नीलकण्ठनामा बालको दीपात्प्रवर्तितो द्वितीयः दीप इव सर्वथा पितुः प्रतिनिधिर्बभूव । सर्वविधशास्त्रार्थसमरकानने सदैव स सिंहायते स्म ।

## शिष्याःतेषु प्रीतिश्च ,

श्रीदीक्षितः शिष्यस्नेहसागर एवासीत् । स सदैव स्वान्तेवासिना सर्वविधयोगक्षेमसम्पादने जागरूकः आसीत्। विमलविद्यादानेन न केवलं सः तेषां ज्ञानपिपासामेव शमयामासः; अपि तु भोजनवस्त्रद्रव्याणि च मुक्तहस्तः स्मयमानो वितीर्य तेषामार्थिक-चिन्तासरितमपि शोषयामास । इदमीयामद्वितीयां निगमागमान्तं जगाहुषीं वैदुषीं, निर्भरां निर्व्यजाञ्च शिष्यप्रीतिं श्रावं श्रावं नानादिग्देशान्तरेभ्यो मेधाविनो विद्यार्थिनः समागत्य एतदीयचरणच्छायायां स्थित्वा स्वहृदयाकाशव्यापकं संशयतिमिरं तदीयोपदेशेन्दुकान्तिपूरेण सानन्दमपाकुर्वन्ति स्म ।

अष्टाविंशतिवयदेशीयेन श्रीदीक्षितेन यदा नाम 'शिवार्कमणिदीपिका' तदा परमप्रीतः श्रीचिन्नवोम्मभूपोऽस्मै कनकपीठे काञ्चन ,ग्रन्थरत्नं निरमायि पुष्पपटलैः कनकपूजां समर्पयामास । तत्प्रसङ्गे भूपोऽस्मै विपुलां स्वर्णपुष्पराशिं प्रददौ। किन्तु श्रीदीक्षितेन समस्तं तत्कनकमुद्रापटलं ग्रन्थपाठकेभ्योऽन्तेवासिभ्यो च दत्तम् । इत्थ 'शिवार्कमणिदीपिका' निश्चीयते यदस्य नैजे संस्कृतविद्यालये पञ्चशतं छात्राः आसन् । तान् सर्वानय नियमेन सस्नेहं पाठयति स्म। एतदीयः ज्येष्ठपुत्रो नीलकण्ठदीक्षितः एतदीयशिष्येषु अतिप्रखरबुद्धिर्बभूव । वैयाकरणसिद्ःधान्तकौमुदी-प्रौढमनोरमा-शब्दकोस्तुभाद्यनेकशब्दशास्त्रीयग्रन्थप्रणेता श्रीभट्टोजिदीक्षितोऽपि अन्ततोगत्वा एतदीयाम् अन्तेवासिताम् उररीकृतवानासीत् । घटना सेत्थमस्ति।

## भट्टोजिदिक्षितः

एकदा श्रीभट्टोजिदीक्षितो लोकाभिरामभक्तजनविपद्विरामरमणीयरामकृतसेतुबन्धयात्रार्थं निर्जगाम ।

श्रीचिदम्बरं प्राप्य तन्मनसि श्रीमदप्पयदीक्षितस्य दर्शनाभिलाष उदियाय । ततः पुष्पफलपाणिः सश्रद्धं स श्रीदीक्षितस्य गृहं प्रविवेश । तदानीं तत्र श्रीमदप्पयदीक्षितः काँश्चित् स्वशिष्यान् श्रीभट्टोजिलिखितां सिद्धान्तकौमुदीं तल्लिखित-प्रौढमनोरमा-व्याख्यान-पुरस्सरं पाठयन्नासीत् । श्रीभट्टोजिः सादरं पुष्पफलानि समर्प्य सश्रद्धं प्रणम्य तं तदिङ्गितं च प्राप्य समीपे एव समुपविवेश । श्रीभट्टोजिः स्वीयान् ग्रन्थान् पाठ्यमानान् दर्शं दर्शं नितरां मुमुदे।

पाठोपसंहारसमये श्रीमदप्पयदीक्षितेन कथितं यदेष ग्रन्थकारस्य अभिप्रायो महामुनिपतञ्जलिप्रणीतमहाभाष्यविरुद्धो विद्यतेतेन तत्स्थलमपि निर्दिष्टम्। , नम्रतापुरस्सरं च ;समीपे तिष्ठन् श्रीभट्टोजिः इदं सोढुं न शशाक ग्रन्थकारस्य अभिप्रायं महाभाष्यसम्मितमेव साधयामास । श्रीमदप्पयदीक्षितेन तदीयं सिद्धिप्रकारं खण्डयित्वा पुनः स्वीय एव पक्षः पुष्टिं प्रापितः । पुनः श्रीभट्टोजिरपि स्वपक्षपोषाय प्रयत्नं चकार । एवं रीत्या द्वांभ्यामेव स्वस्वपक्षसमर्थनं विहितम् । एतस्मिन्नेव व्यतिकरे स्मयमानस्य श्रीमदप्पयदीक्षितस्य मुखात् सहसैव विनिर्गतं यद्किं त्वमेव ' , तुभ यद्धि ? भट्टोजिरसि्ंयं ग्रन्थकाराभिप्रायो भृशं रोचते?' इति ।

श्रीभट्टोजिरपि इदमाकर्ण्य करौ सम्पुटीकृत्य सोऽहमेवास्मि ! भगवन्' इति कथयित्वा स्वशिरो नमयामास । 'अल्पमतिः भट्टोजिः

अथ तु श्रीमदप्पयदीक्षितो भृशं प्रसन्नो बभूव । भट्टोजेः पृष्ठं स्वपाणिना परामृश्य भूयांसं स्नेहं प्रददौ। तस्मिन्नेव समये श्रीभट्टोजिदीक्षितस्य चेतसि श्रीमदप्पयदीक्षितेन्द्रशिष्यताङ्गीकाराय मतिरुदियायप्रार्थयामासापि स ; तदानीमेव श्रीमदप्पयदीक्षितं यत्ते दर्शनशास्त्रं तं पाठयेयुः । श्रीदीक्षितः नाम स्वग्रन्थं भट्टोजिं पाठय 'मध्वमतखण्डनं' सस्नेहं स्वीकृत्यामास । सेतुबन्धयात्रां पुनः :सम्पूर्य श्रीभट्टोजि (यदर्थं स निर्गत आसीत्) श्रीमदप्पयदीक्षितमुपगम्य सुचिरं तत्र अवस्थाय तं संसेव्य तत्सकाशाच्च परिमलप्रभूतीननेकान् दर्शनशास्त्रीयग्रन्थान् पपाठ।-न्यायरक्षामणि

श्रीमदप्पयदीक्षितेन्द्रस्य आज्ञया चतुर्लक्षणीस्थानां मध्वमतसिद्धान्तानां खण्डनार्थं श्रीभट्टोजिना यथा तत्त्वकौस्तुभो नाम ग्रन्थो व्यरचितथैव ; अपि 'तन्त्रसिद्धान्तदीपिका' पूर्वमीमांसारहस्योद्घाटनाय गुरुप्रेरणयैव विरचितः।

एतदीयपुत्रेण श्रीनीलकण्ठदीक्षितेनापि स्वीयेषु गङ्गावतरण--वैराग्यशतकशिवरहस्य शिवलीलार्णवशिवोत्कर्षमञ्जरीप्रभृतिषु ग्रन्थेषु - एतदीयमहिमा गुरुगौरवेण उपवर्णितोऽस्ति ।

## सर्वतोमुखी प्रतिभा

श्रीमदप्पयदीक्षिते अतिविलक्षणा घर्षितविपक्षिविचक्षणा सुलक्षणा श्लक्ष्णा सर्वतोमुखी च प्रतिभा आसीत्। वयसा विंशतिसमासमोऽपि अनल्पमेधाः अयं दिक्षु विदिक्षु वैदुष्यप्रख्यापने शास्त्रानुशीलने छात्रानुशासने च सर्वेषामेव शेमुषीजुषां विदुषां मानसवासी बभूव । केचन तु एतदीयाय सर्वत्रप्रथिताय यशःपटलाय अप्रसूयन्तोऽनेन सह शास्त्रार्थाय बद्धपरिकरा भूत्वा एतदीयं ग्राममप्यागताः। किन्तु ते सर्वे एवं पराजिता भूत्वा एतदीयां वशंवदतामुररीकृतवन्तः । वाराणसेयाः कतिचिद् विद्वांसस्तु शास्त्रे एनं जेतुकामाः तत्र गत्वा तदीयं प्रथममेव सविनयं परिचयात्मकं छन्दोबद्धं वाक्यं श्रुतिविषयीविधाय तस्य शिष्या एव बभूवुः। घटना इत्थं लभ्यते -

एकदा काश्यां केचन पण्डिताः श्रीदिक्षितेन सह शास्त्रार्थाय तदीयं ग्रामं प्राप्ताः। श्रीदीक्षितेन तेषां सर्वेषां हार्दिकमातिथ्यमकारि। यदा तेषां मार्गश्रमो दूरीभूतःतदा तैः शास्त्रार्थश्रीगणेशकामनया भूमिकाहेतवे श्रीदीक्षितः पृष्टो , ,यत्‘कथयतु भवान् कस्मिन् शास्त्रे कुशलोऽस्तिइति। श्रीदीक्षितमहोदयो ' यद्यपि निखिलशास्त्रानुशीलनावदातचित्त आसीतसर्वत्रैव तस्य , - सरस्वती तु तदीयवाचि नरीनृत्यते स्म ,मनीषिणो धिषणा निरापदासीत्

**साहित्ये सुकुमारवस्तुनि दृडन्यायग्रहग्रन्थिले**

**तर्के मा मयि संविधातरि समं लीलायते भारती।**

**शय्या वास्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरास्त्रता,**

**भूमिर्वाहृदयङ्गमो यदि पतिस्तुल्या रतिर्योषिताम्॥**

इति श्रीहर्षकविघोषस्तस्मिन्नक्षरशश्चरितार्थो भवन्नासीत्तथापि , - परमनम्रतापुरस्सरं सस्मितं सविनयं स प्रत्युवाच

**नाहमधीती वेदे न च पठिती यत्र कुत्रचिच्छास्त्रे।**

**किन्तु दरेन्दुवतंसिनि पुरहिंतिनि भूयसीभक्तिः॥**

अयं भावः न च किमपि शास्त्रमेव पठितवान् ,नाहं वेदमधीतवान् - किन्तु चन्द्रशेखरे पुरारौ निबिडभक्तिमान् अस्मि । परन्तु प्रत्युत्तररूपेण अनायासेन एव पदमात् परिमलमिव तन्मुखाद् विनिर्गतममुं श्लोकं निशम्य ते सर्वे एव वाराणसीपण्डिता विस्मिता बभूवुः । श्लोकस्य छन्दोविधानेन ,रसपेशलया शब्दशय्यया ,कोमलकान्तया पदावल्या , अयत्नजेन चालङ्कारेण तेषां मत्यां श्रीदीक्षितस्य न केवलं शास्त्रे ,'वेदे अधीती' अपि तु ,काव्यकाननकेशरित्वमेव प्रकटीबभूव इति 'दतस्येन्विषणस्य कर्मण्युपसङ्ख्यानम्' स्थलद्वये-इति 'पठिती सप्तमीकारकोपस्कारकस्यवार्तिकसूत्रस्य मार्म्मिकं प्रयोगसौष्ठवमपि तेषामाशु चित्तं चमच्चकार रिति शब्दे 'सहैव चतुर्थे चरणे भूयसीभक्ति , स्त्रियाः ' इति भागे पुंवद्भावाभावोऽपि श्रीदीक्षितस्य 'भूयसी' इति 'पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु पाणिनिसूत्रीयपुंवदभावविषयकप्रयोगप्रावीण्यमपि तेषां मनसि प्रवेशयामास।

इत्थं श्रीदीक्षितस्य काव्यव्याकरणादिषु शास्त्रेषु निसर्गसिद्धाम् अप्रतिहतप्रसरां विपक्षिवादिघस्मरां गतिं निभालं निभालं ते काशिकाः - स्तावं स्तावं च तं ,पण्डिताः श्रीदीक्षितेन समं वादाय साहसमेव तत्यजुः कञ्चित्ः्कालं तत्र सौमनस्यपुरस्सरमुषित्वा यथारुचि यत्र तत्र तीर्थेषु परिभ्रमन्तः श्रीदीक्षितवैदुषी च प्रशंसन्तो वाराणसीं निवबृतिरे ।

श्रीदीक्षितस्य सर्वोऽपि समयो यजनदानप्रभृतिभिरेव -पाठन-पठन-याजन-श्राद्धतर ,लोककल्याणकरैः कर्मभिः व्यतीतो भवन्नासीत् । यज्ञैर्देवान्ः्पणैः पितृन्ज्ञानैश्च ब्रह्मनिरतान् ब्राह्मणान् ,बलिभिर्भूतान् ,आतिथ्यैरतिथीन् , प्रतिदिनं सन्तोषयन् परमपूतकायः श्रीदीक्षितो भासुराणां भूसुराणां समवाये सुराणां समवाये बृहस्पतिरिव शोभते स्म। एतत्कृतस्य ज्योतिष्टोमयागस्य महिम्ना सर्वत्र शान्त्याह्लादसाम्राज्यं बोभूयते स्म । सस्वरं तत्र प्रोच्चार्यमाणानां वेदमन्त्राणामुद्घोषेणयथाविधि हुतानि परमपावनसुरभीणि , अनवरतं ,हवींषि गृह्वतां यज्ञानलानां परिमलितधूमाभिः ज्वालामालाभिः वितीर्यमाणविविधास्वादसम्पन्नान्नराशिभिश्च निखिलमेव तत्रत्यं वातावरणं

पूतं भूतमासीत् । वेदेषु वेदविहितकर्मसु च श्रद्धोत्पाद एव श्रीदीक्षितानां चरमं लक्ष्यमासीत्। एवमेव सोमयागेन सोमेश्वरं चन्द्रशेखरं प्रीणयन्तस्ते समेषामेव श्रद्धाभाजन बभूवुः ।

## कर्मकाण्डे वैदुष्यम्

श्रीदीक्षितोऽद्भुतकर्मकाण्डी आसीत् । कर्मकाण्डावसरे अनेकशोऽनेन अलौकिकचमत्काराः प्रदर्शिताः । एकदा अयं वाजपेययज्ञं कुर्वन्नासीत्, तदानीं बलिप्रदानार्थमानीतानश्वान् दीनानधीरान् नयनविषयीकृत्य दुःखितो भूत्वा यज्ञाधिपतिं प्रार्थयामास यद्, 'भगवन् ! दीनपशुबलिपूर्णो यज्ञो भवते कथङ्कारं रोचते? बलिनिमित्तमागतानामेतेषां, पशूनां , दैन्यमधैर्यञ्च दर्शं दर्शं ममापि धैर्यं लुम्पदस्ति। कृपया मदीयं संशयं छिनत्तु भवान्' इत्येव प्रार्थयमाने एव श्रीदीक्षिते, ते सर्वे एव बलिपशवः प्रसन्नवदनाः प्रसन्नान्तरात्मानश्च दद्दशिरे।

तदनु तु प्रसन्नतया आलम्भनं प्राप्तवतां तेषां पशूनां मेदोमांसादिभिः आहुतिं दातुकामं श्रीदीक्षितं निवारयन्तः केचन ब्राह्मणाः तस्य बलिदानकर्मणो हिंसाजनकतावच्छेदकतां नरकावाप्तिप्रयोजकतां

समाजदूषकताञ्च साटोपं साधयामासुः । एतस्यां परिस्थितौ श्रीदीक्षितमहोदयो यज्ञेश्वरं प्रार्थयामास यत्स तथा कमपि चमत्कारं प्रदर्शयेत् यथा वेदेषु यज्ञेषु च लोको विश्वासं कुर्यात् इति। श्रीदीक्षितकर्त्तृकप्रार्थनया प्रीतो यज्ञपतिः बलीभूतान् आलम्भितांश्च तान् पशून् आकाशे प्रादर्शयत् । सर्वैरेवावालोकि यद् आकाशे देवरूपाः पीताम्बरधारिणो विमानारूढाः पुरुषाः बद्धाञ्जलयः श्रीदीक्षितं स्तुवन्तः कथयन्तः सन्ति यद् ,'अध्वरिप्रवरअस्मानालभ्य अस्मासु भवता ! वयं भवत्सम्पर्कमासाद्य यज्ञपतिहवींषि भूत्वा ,कृपा कृतास्ति , महती मदीयानां पूर्वजानामेकविंशतिरपि सहास्माभिरेव ,देवत्वमापन्नाः स्मः अनुजानातु ,तुभ्यं नमोऽस्ति ,देवत्वमाप्तवती अस्ति एनेन बलिकर्मणा भवानस्मान् दिव्यसुखान्यनुभवितुम्।

आकाशे विमानस्थितानां तेषामिमानि वचांसि श्रावं श्रावं तान् हृद्यानवद्यरूपान् दर्शं दर्शञ्च सर्वे एव बलिनिन्दितारो विस्मयाभिभूताः सन्तो दीक्षितं प्रणेमुः।

## दार्शनिकः

श्रीदीक्षितो विलक्षणो दार्शनिक आसीत्। अयं कदाचिदपि क्वचिदपि दुराग्रहं नाकरोत्। याथातथ्योररीकरणे अयं क्वापि औदासीन्यं नाप्नोत् । प्रायेण दार्शनिकाः चिन्तनशीलत्वात् भक्तिमन्तो न भवन्ति; किन्तु एष विचक्षणस्तु विलक्षण एव आसीत् । अद्वैतवादरतोऽपि निराकारे निरञ्जने निर्गुणे ब्रह्मणि श्रद्दधानोऽपि एष भवानीशङ्करयोः उपासनया एव जीवनस्य साफल्यम् अमन्यत । निर्गुणनिष्ठोऽपि सगुणनिष्ठः, ज्ञानवानपि भक्तिमान्, प्रियाद्वैतोऽपि साधितद्वैतोऽयम् इतरेषां विदुषाङ्कृते समन्वयात्मकं प्रशस्तं पन्थानम् अदर्शयत् ।

श्रीबादरायणप्रणीतब्रह्मसूत्रोपरि श्रीश्रीकान्ताचार्यलिखितस्य भाष्यस्य सारल्यार्थं सारावबोधार्थञ्च श्रीदीक्षितेन या 'शिवार्कमणिदीपिका' — तस्यां तेन लिखितमस्ति ,लिखिता

**"यद्यप्यद्वैत एव श्रुतिशिखरगिरामागमानां च निष्ठा,**

**साकं सर्वैः पुराणैः स्मृतिनिकरमहाभारतादिप्रबन्धैः॥**

**तत्रैव ब्रह्मसूत्राण्यपि विमृशतां भान्ति विश्रान्तिमन्ति,**

**प्रत्नैराचार्यरत्नैरपि परिजगृहे शङ्कराद्यैस्तदेव॥**

**तथाप्यनुग्रहादेव तरुणेन्दुशिखामणेः,**

**अप्रद्वैतवासनां पुंसामाविर्भवति नान्यथा॥"**

अत्र श्रीदीक्षितोऽभिप्रैति यद्महाभारतादिपुराणैः सह श्रौतागमानां , विश्रमपदानां निर्मलानां भासुराणां ,विश्वासः अद्वैतवादे एव वरीवृत्यते ब्रह्मसूत्राणामपि तदेव तात्पर्यमस्तिआचार्याः :प्राचीना ; अहं ;श्रीमच्छङ्कराचार्यादयश्चापि अद्वैतभावमेव परिपोषितवन्तः सन्ति किन्तु ;जानामि यदिदं सर्वं सत्यमस्ति (श्रीमदप्पयदीक्षितः) ,अयमद्वैतभावः चन्द्रशेखरस्य जगच्छङ्करस्य श्रीशङ्करस्य अनुग्रहेणैव दययैव च प्रादुर्भवितुं ,कृपयैव शक्नोति इतरथा नैव। श्रीशङ्करानुग्रहोऽपि तदैव लब्धुं शक्यते यदा चिद्रूपया तदीयशक्त्या सहैव स शिवः समाराध्येत । अस्माद्धेतोः अद्वैतभावलाभाय साम्बशिवाराधनं परमावश्यकमेवास्ति इति।

इदमत्र महद्वैलक्षण्यं विद्यते यदेकस्यां दिशि तु सः अद्वैतवादी अस्ति , अपरस्यांच दिशि स साम्बशिवाराधनारूपे द्वैतवादे श्रद्दधाति । वस्तुतस्तु सः शम्भुं निर्गुणब्रह्मत्वेन जानातिसाम्बं च तमेव सगुणं मन्यते । अत ; द्वैतसमन्वयो निरापद् दरीदृश्यते । एवमेव च निजे -एव तस्य अद्वैत न कविर्न मुनिर्न देवयोनिः परमात्मा शिव एव ' जीवनेऽप्ययं केवलोऽहम््इत्यात्मानं नित्यशुद्धबुद्धब्रह्मरूपं मन्वानोऽपि यागरूपायाम् ' अखण्डकर्मकाण्डोपसनायां सदैव दृढप्रत्ययो बभूव । श्रीदीक्षितस्य इयं धर्मगतायाः साम्प्रदायिकतायाः कृते अयं मनागपि ,विशेषता आसीत् यद् प्रश्रयमाश्रयं वा नादात् । यद्यप्यन्ये पण्डिताः साधवस्तदानीमुग््रतया नेत्रमीलनपुरस्सरं स्वं स्वं सम्प्रदायम् आद्रियन्ते स्मएवञ्च इतरसम्प्रदायम् ; अनाद्रियन्ते स्म। किन्तु अयं महानुभावः साम्यं साधयन् समन्वये विश्वासं वैष्णवानां पारस्परिककलहनिवारणाय अनेन महान् -करोति स्म । शैव प्रयत्नोऽकारि। अनेन कदापि श्रीहरिनिन्दा न कृता । यतो हि अयं जानाति स्म यद् । अत एव 'शिवस्य हृदयं विष्णुः विष्णोश्च हृदयं शिवः' उभयोरेव ;हरिहरयोरभेदं मन्यमानोऽयं सदैव उभावेव अपूजयत् समादरमकरोत् ।

तेन यावता आदरेण यावत्या च श्रद्धया श्रीशिवमाहात्म्यसंदीपिका तावतैव समादरेण श्‍ ,व्यरचि 'शिवार्कमणिदीपिका'रद्धाभरेण च श्रीविष्णुमाहात्म्यद्योतकौ 'वरदराजस्तवः''श्रीकृष्णध्यानपद्धतिःइति ' नामकावपि ग्रन्थौ अलेखिषाताम्। गरिष्ठया निष्ठया तेन इति नामकस्य 'यादवाभ्युदयम्' श्रीवेदान्तदेशिकविरचितस्य कृष्णभक्तिपरस्य ग्रन्थस्योपरि कृष्णमाहात्म्यप्रदर्शिका व्याख्यापि व्यधायि । स हरिहरयोरभेदे द्रढीयासं प्रत्ययं रक्षति स्म । स्वीयैतदभेदभावपोषाय एव तेन नामैकं स्तोत्रमपि निरमायि। 'हरिहरशतकम्'

## राजसम्मानोपलब्धयः

यदा श्रीदीक्षितमहोदयो निरन्तरं विधीयमानैः यज्ञकर्मभिः परमपूततनुरभूत्, तदा अध्वरिप्रवर इति नाम्नापि श्रीदीक्षितं यज्ञदीक्षितं परिचरितुं नैके राजानः 'अहं पूर्वम्' 'अहं पूर्वम्' इति भावनया प्रयतितुमारभन्त । श्रीदीक्षितोपरि श्वेतच्छत्रधारणे चामीकरदण्डविराजितचामरवीजने वा सर्वे राजानः श्रद्धालवो बभूवुः । किन्तु श्रीनरसिंहवर्मा श्रीदीक्षितं परिचरत्सु तेषु राजसु प्रवीणतया धुरीणतामाससाद। तत्सभारत्नानि श्रीभौतिकचिदम्बर-

शुकमुखादयो महाकवयोऽपि बिबुधं श्रीदीक्षितं विविधं प्रशशंसुः, तदीयकर्मकाण्डप्रकाण्डतायाश्च अखण्डनीयतां मेनिरे।

## शैवः

श्रीदीक्षितः परमशैवः आसीत् । स सदैव शिवाराधनायामेव प्रकाशं पातयितुमभ्यस्तः आसीत्, तस्य स्वाभाविकं कथनमासीत् -

**"यावन्नायाति मरणं यावन्नाक्रमते जरा**

**श्रद्धामात्रेण सकलैरर्चनीयो हि शङ्करः।"**

किन्तु अस्य इदं तात्पर्यं नासीत् यत् स इतर इव विष्णुध्रुक् शैव आसीत् , न वा ,यतो हि स शैवो भूत्वा क्षणमपि विष्णुं विष्णुपूजां वा न निनिन्द खण्डयामास । स तु सदैवहरिहरयोः अभेदम् अमन्यत । यथा हि स कथयत्यपि हरिहरशतके —

**"मारमणमुमारमणं फणधरतल्पं फणाधरकल्पम्।**

**मुरमथनं पुरमथनं वन्दे वाणारिमसमबाणारिम्॥"**

अपि च तत्रैव -

**"वस्तां पिशङ्गं वसन दिशो वा,**

**गरुत्मता यातु ककुद्मता वा।**

**निद्रातु वा नृत्यतु वाधिरङ्गं,**

**भेदं न पश्यामि परस्य वस्तुनः॥"**

किन्तु शिवभक्तिदूषणपराणां जनानां मुखावरोधाय स कदाचिदपि आलस्यं न करोति स्म । स स्वीयमाशयं विशदीकरोति -

**"विष्णुर्वा शङ्करो वा श्रुतिशिखरगिरामस्तु तात्पर्यभूमिः,**

**नास्माकं तत्र वादः प्रसरति किमपि स्पष्टमद्वैतभाजाम्।**

**किन्त्वीशद्वेषगाढानलकलितहृदां दुर्मतीनां दुरुक्तीः,**

भङ्क्तुं यत्नो ममायं नहि भवतु ततो विष्णुविद्वेषशङ्का॥"

अत एव च श्रीदीक्षितो हरिहरयोः अद्वैतभावनां संरक्षन् हरिनिन्दां न कुर्वन् यज्ञैश्च यज्ञमहिमानं प्रथयन् शिवमाहात्म्यध्वजम् उत्तोलयुम् आरेभे। श्रीदीक्षितस्य तादृशमनन्यादृशं पाण्डित्यमालोच्य श्रीचिन्नबोम्मभूपस्तस्मिन्ननुदिनं श्रद्धाभावं वर्धयामास ।

## मन्दिरनिर्माणम्

अनेकैः राजभिः महाराजैश्च यदृच्छयैव तस्मै विपुलधनराशिरदायि; किन्तु तेन महाभागेन लब्धस्य तस्य सर्वस्य धनस्य वितरणं दीनेभ्यो दरिद्रेभ्यो जनेभ्यो विहितम्। श्रीचिन्नबोम्भभूपेन तु तस्य कनकाभिषेक एव कृतः आसीत् । तस्मात् समुपलब्धधनकूटेन तेन स्वीये अडय्यप्पलग्रामे भगवतः श्रीशङ्करस्य कैलासनीकाशम् आकाशचुम्बनचञ्चुरं हिमधवल-पाषाणशिलाखचितं दिव्यमणिमण्डितं नयनाभिरामं विपदां विरामं बन्धुरं मन्दिरं निर्मापितमस्ति, यदद्यापि सुदूरादेव भक्तजनानां मनांसि समाहरति । इदं श्रीशिवमन्दिरं श्रीमदप्पयदीक्षितः वेदाकाशशरेन्दु (१५०४) परिमिते

शालिवाहनीये शाके वत्सरे निर्मापयामास । अस्मिन् मन्दिरे सुजटितेन शिलालेखेन प्रत्यक्षं बुद्धिगम्यं भवति यत्, पञ्चशतच्छात्राणां कृते सर्वविधसौविध्यानि वितीर्य शिवार्क-मणिदीपिकादिकं ग्रन्थजातं तानेषः पाठयति स्म। श्रीचिन्नबोम्मभूपसमर्पितो निखिलश्चामीकरनिधिरनेन 'शिवार्कमणिदीपिका'-पाठकानां विद्यार्थिनां कृते वितीर्ण आसीत्।

## तपोबलम्

### १.ज्वर-वसनम्

एकदा श्रीदीक्षितमहोदयो गरीयसा ज्वरेण पीड्यमान आसीत् । तद्वेदनया तस्य गात्राणि कम्पमानानि आसन् । तस्मिन्नेव व्यतिकरे ताताचार्यसहितः श्रीचिन्नबोम्मभूमिपालस्तद्दर्शनकामनया तदीयं द्वारं खटखटाकार्षीत्। महामनाः श्रीदीक्षितः आत्मनानुभूयमानं तं ज्वरं राज्ञा सह करिष्यमाणे वातालापे विघ्नं प्रतिबन्धको वा मत्वा तं समीपवर्तिनि नागदन्तके अवलम्बमाने कस्मिंश्चिद् वस्त्रे समारोप्य वीतव्यथो मुदितमनाः राजस्वागतं चकार । राजा वेपमानं तद् वसनं नयनविषयीकृत्य कारणं

ज्ञातुमपारयन् श्रीदीक्षितमेव सप्रश्रयं तत्कम्पनहेतुमप्राक्षीत् । श्रीदीक्षितेन निवेदितं याथातथ्यं निशम्य राज्ञो हृदि संशीतिरुत्पन्ना । तदा श्रीदीक्षितेन कथितं यद् 'राजन् ! मम वचसि यदि प्रत्ययो न भवति, तर्हि प्रत्यक्षं पश्यतु । अहमिमं ज्वरमात्मनि गृह्णामि; अथ वस्त्रकम्पो न भविष्यति; दृश्यतामित्येवं कथयित्वा श्रीदीक्षितेनात्मनि ज्वरो गृहीतः । तदा तु श्रीदीक्षितस्य शरीरं तथैव कम्पितुमारभत यथा प्राग् वस्त्रं वेपमानमासीत् । इदं सर्वं प्रत्यक्षं पश्यतो राज्ञो विस्मयः परमं सीमानं पस्पर्श । तेन प्रार्थितः श्रीदीक्षितः पुनः स्वीयं ज्वरं वस्त्रे नियोजयामास । राजा क्षमां ययाचे; प्रार्थयामास च श्रीदीक्षितं यद् ज्वरं परिहरतु सः । किन्तु 'प्रारब्धकर्मणां भोगादेव क्षयः' इति कथयित्वा स्मयितुमारभत स महाभागः ।

## २. हव्यस्य अक्षयत्वम्

अन्यदा यागद्रूहो वक्तुमारभन्त यद् यज्ञे व्यर्थमेव मानवोपयोगिनो भोग्यपदार्थाः वह्निसात् क्रियन्ते । तदा श्रीदीक्षितमहोदयः प्रत्युवाच यद्, यज्ञे यानि वस्तूनि श्रीयज्ञेश्वराय येन समर्प्यन्ते, तानि सदैव तत्कृते अक्षय्यानि तिष्ठन्ति; यदि विश्वासो न भवेन्मम वचसि तर्हि पश्यन्तु सर्वे

भवन्तो यज्ञभगवन्तम् । एवं कथिताः यदा जनास्तत्र दृष्टिं पातयन्ति, तर्हि तत्र अनाविले यज्ञानले स्वस्वहुतवस्तूनि विलोक्य परमविस्मयान्विताः भूत्वा श्रीदीक्षितं स्तोतुमारभन्त ।

## ताताचार्यस्य असूया

वेलूरपुराधीशस्य श्रीचिन्नबोम्मनाम्नो धराधिपतेः सभायां तातार्चार्यनामा विलक्षणो विचक्षणोऽकारणमेव श्रीदीक्षितस्य यशश्चन्द्रे कलङ्ककालिमानं द्रष्टुमिच्छति स्म। अत एव स चिन्नबोम्मं राजानमपि श्रीदीक्षितवैपरीत्ये विधातुं सर्वदैव प्रयतते स्म । श्रीदीक्षितस्य सम्मानस्तस्मै मनागपि न रोचते स्म । अतः स सदैव श्रीदीक्षितस्य अपाण्डित्यम् अपरिपक्वतां च निरूप्य चिन्नबोम्महृदयपटलात् श्रीदीक्षितस्य श्रद्धेयां मूर्तिमपाकर्तुं चेष्टते स्म।

प्रारम्भे श्रीचिन्नबोम्मः ताताचार्यकथनेन श्रीदीक्षितं बहु नामन्यत । अत एव यदा सर्वे राजानः श्रीदीक्षितं सेवितुं छत्रचामरादिधारणं चक्रुस्तदा अयं ताताचार्यनिवारितः सन् तं न भेजे। किन्तु विश्वस्तजनजिह्वाभ्यः श्रीदीक्षितस्य वैदुषीं श्रावं श्रावं स तस्मिन् बद्धादरो बभूव एव ।

अपराधक्षमापनपूर्वकं च तेन राज्ञा शिविकया श्रीदीक्षितः स्वपुरमाहूतः । आगतवतो दीक्षितस्य स्वागतं श्रीचिन्नबोम्मो महता सम्भारेण विधिवैभवाभ्यां च सहाकार्षीत् । सम्पूज्यमानस्य एव श्रीदीक्षितस्य नैपुणीं निभालं निभालं श्रीचिन्नबोम्मभूपालस्तस्मै राजसभाध्यक्षत्वं प्रदाय तं भृशं सच्चकार । अनेन प्रकारेण श्रीदीक्षितस्य निवासः असूयावतः ताताचार्यस्य समीपे एव तदाश्रयदातृराजसभे जातः । वराकः ताताचार्यो महद् दुःखमलभत । किन्तु कुर्यात्तु कुर्यादेव किम्। गूढं दंशावसरं प्रतीक्षमाणो नाग इव सोऽपि भूपालाभिलाषानुवर्त्ती बभूव ।

आत्मानं वैष्णवं मन्यमानो विष्णुभक्तमन्यमानो महामानी महाभिमानी शिवध्रुक् ताताचार्यः श्रीदीक्षितस्य राजसभायां तस्य सम्मानम् आलोक्य तेन समं वैरं वर्धयितुं आरेभे । श्रीदीक्षितो जानन्नपि तदीयं दुर्भावं वैरभावं स्वीयसहजदयालुतावशात् विद्याविनयवैभवशालीनता-वशाच्च गर्हितचर्ये ताताचार्ये कदापि वक्रदृष्टिर्न बभूव। किन्तु कुटिलचेताः ताताचार्यो न केवलं शास्त्रार्थ एव श्रीदीक्षितं पराजेतुमकामयतअपि तु सोप्नेकधा , श्रीदीक्षितस्य प्राणानपि ग्रहीतुं प्रायतत । स इदमप्यैच्छत् यत्केनापि उपायेन ,अयं दीक्षितः श्रीचिन्नबोम्मभूपस्य उपेक्षापात्रः अविश्वासपात्रः च भवेत् येन अयम् अस्माद् राजसभायाः निष्क्राम्येत । इत्थमेकतश्च तु श्रीदीक्षितो

राज्ञो बहुमानभाजनो भूत्वा राज्ञा सत्क्रियमाणो राशे योगक्षेमौ कामयमानः ससुखं निवसति स्मअपरतश्च ताताचार्यो नैकविधानि जघन्यानि ; कपटकर्माणि कुर्वन् श्रीदीक्षितस्य अशुभसाधने कृतसङ्कल्पः सचिन्तो वसनः्नासीत्।

## ताताचार्येण दुर्गोष्ठी अभिचारप्रयोगः

एकदा ताताचार्येण दुश्चिन्तितं यदेषः दीक्षितो राज्ञो योगक्षेमभरम् आत्मनि गृहीत्वा राजमानभाजनः जातोऽस्ति, तत्कथन्न आभिचारिकप्रयोगेण राजदारान् रुग्णीविधाय दीक्षितमन्त्रशक्त्याः परीक्षा ग्रहीतव्या? सौभाग्याद् यदि दीक्षितो भूपाङ्गनारोगम् अपाकर्तुमक्षमो भविष्यति, तर्हि अहमेव रोगापहारं कृत्वा राजदृष्टौ दीक्षितापेक्षया महीयः भविष्यामि; भूपश्च दीक्षितं साधारणमेव ब्राह्मणं मन्यमानः तमुपेक्षाक्षिभ्याम् अवलोकयितुम् आरप्स्यते; साभाध्यक्ष्यमपि च तस्माद् अपहरिष्यतीति। तदनन्तरं समयमवाप्य तेन कस्मैचिद् आभिचारिकाय तान्त्रिकाय विपुलं धनं दत्त्वा स स्वपक्षे कृतः । तस्यैव च साहाय्येन तेन राजदारेषु अतिभयङ्करो जूर्तिरोगः समुत्पादितः । येन सर्वा एव राजवनिताः नितरां निपीडिताः

अभूवन् । तासां कष्टम् आलोकमालोकं विषीदन् भूपो वैद्यान् तदपाकरणाय बहुधनदानपुरस्सरं नियोजयामास। किन्तु यदि वास्तविकः कश्चिद् रोगोऽभविष्यत्, तदा तु नूनं ते वैद्यराजाः तम् अपाकरिष्यन्; परं स तु तान्त्रिकस्य अभिचारप्रयोग आसीत्; अतो वैद्या हताशा भूत्वा भूपस्य सविधे स्वीयम् असामर्थ्यं निवेदयामासुः । तैः इदमपि न्यवेदि यद्, 'प्रजावत्सल ! अन्तःपुरे कोऽपि स्वाभाविको रोगो नास्ति; अपि तु तत्र इत्थं प्रतिभाति यत्केनापि धूर्तेन तान्त्रिकेण अभिचारबलेन रोगोत्पादितः । अतः कोऽपि कुशलः तन्त्रविदेव विपदमेनां निवारयितुं शक्नोति इति'

तेषां वचनं निशम्य राजचेतसि श्रीदीक्षितस्य मूर्त्तिः स्थानमलभत। ततः प्रणम्य विषण्णवदनेषु गतेषु वैद्येषु भूमिपालः श्रीदीक्षितनिकेतनं गत्वा प्रणम्य तं सर्वञ्चिद्वृत्तजातं निवेद्य यथोचितं कर्त्तुं प्रार्थयामास । शरणागतवत्सलः श्रीदीक्षितो भूपं सन्तोष्य विसृज्य च ध्यानदृशा ताताचार्यानाचारमालोच्य श्रीमृत्युञ्जयं भक्तजनशङ्करं शङ्करं ध्यायं ध्यायम् अभिचारप्रयोगोपशमाय जाज्वल्यमानज्वालामालाकुलीकृते वह्निकुण्डे - सविधि मन्त्रोच्चारणपुरस्सरं हवनं कर्तुमारेभे।

श्रीदीक्षितकृतेनानेन यज्ञकर्मणा राजदाराणां रोगः आकाशकुसुमायितो बभूव । परमप्रीतो विनीतो भूपो विधिना श्रीदीक्षितं सम्पूज्य तस्मिन् द्विगुणितां श्रद्धां ततानममान्तःपुरे ! पप्रच्छापि च तं यत्कथयतु भगवन् ; सस्मितं तं सर्वं ,इति। तदा श्रीदीक्षितः ?कस्येदं दुश्चेष्टितमस्ति ताताचार्यमनोरथं सूचयामास । श्रवणसमकालमेव राजा प्रस्फुरिताधरः कोपकषायितनयनश्च बभूव । किन्तु श्रीदीक्षितस्तः◌ं शान्तं विधाय अवोचत् -'राजन् ;अग्रेऽपि ताताचार्यो बहूनि दुश्चेष्टितानि करिष्यति ! अतः सर्वाण्यपि जघन्यानि ;स भवता समाद्रियमाणाय मह्यम् असूयन्नस्ति कृत्यानि कतुं प्रयतिष्यते । किन्तु विश्वम्भरस्य श्रीशिवस्य अमोघया दयादृशा स सदैव विफलमनोरथो भविष्यति । भवान◌् केवलं पश्यतुतं ; तेन सममित्थं व्यवहरतु यथा स नेदं ज्ञातुं प्रभवेत् यद् ;किमपि न कथयतु भूपतिः मम दुष्कृत्यचेष्टां जानाति । भवता मया च सहनशीलेन भवितव्यमस्ति इति। भूमिपालस्तदीयं तमादेशं शिरसा हारमिव धारयन् ताताचार्यकृतानि अदुश्चेष्टाप्रतीक्षापरो बभूव ।

## गरलामृतम्

एवं गच्छति काले पुनरेकदा अघायुः ताताचार्यः अनघस्य विद्वत्तल्लजस्य श्रीदीक्षितस्य प्राणवियोगानुकूलव्यापारोपायं चिन्तयामास । स च शतं स्वर्णमूद्राः दत्त्वा श्रीहरिमन्दिरस्य एकं वैष्णवम्मन्यम् अर्चकं स्वपक्षे चकार; उवाच च तमेव, यद् हरिदर्शनकामनया यदा श्रीदीक्षितोऽत्र समागच्छेद् तदा त्वया भगवत्प्रसादप्रदानव्याजेन तस्मै गरल-बहुलं चरणामृतसंज्ञं तीर्थसलिलं प्रदातव्यमस्ति इति। सोऽपि पापात्मा कतिपयकाञ्चनमुद्रालोभेन आत्मानं नरके पातयन् स्वीचकार।

इतश्च श्रीदीक्षितः कस्मिंश्चित्पर्वदिने भवानीवल्लभं श्रीशिवमाराध्य श्रीहरिदर्शनेच्छया तत् मन्दिरं जगामश्रीहरिञ्च निदध्यौ । तदानीं तत्रत्यः ; श्रीदीक्षितमहोदयम् आलोक्य ,वस्तुतस्तु पूजारिरेव ,स एव पापी अर्चको प्रसन्नमुखस्तस्य समीपमागत्य प्रणम्य च चरणामृतच्छलेन प्रथमत एव सज्जीकृतं गरलसलिल तस्मै ददौ । समर्पणसमये तदीयः पाणिः चकम्पे ; भूमौ पेतुः । श्रीदीक्षितः इदं सर्वं गरलसलिलबिन्दवोऽपि च केचन वीक्ष्यापि पात्रस्थं तद्गरलसलिलं हस्ते गृहीत्वा श्रीमृत्युञ्जयं शिवं ध्यातुमारेभे । ध्यानसमकालमेव तदीये विमले चेतसि सर्वं रहस्यं स्पष्टं गरलमपि श्रीहरिचरणसलिलस' बभूव । स स्मयितुमारेभे ।ङ्गमासाद्य पूतं

सत् अमृतमिव पेयमेवइति मत्वा श्रीशिवं स्मारं स्मारं पश्यत्येव तस्मिन् ' अर्चके स तत्पपौ । पीत्वा च श्रीहरिं प्रणम्य गृहं जगाम ।

अर्चकः इदं सर्वं दृष्ट्वा अतिविस्मितो बभूव । साधुपरिपीडनरूप-सन्तप्तः स स्वयमेव श्रीदीक्षि-पापकार्यपश्चात् तापानलतच्चरणयोः पतित्वा सर्वं रहस्यं निवेदयन् क्षमां ययाचे । क्षमापारावारो महामनाः श्रीदीक्षितश्च स्मयमानस्तं चक्षमे । यदा चायं वृत्तान्तो भूपेन विदितः तदा स परमविस्मयं लभमानः श्रीदीक्षितस्य वशंब्वदो बभूव । श्रीदीक्षिताज्ञया च स ताताचार्याय प्रकाशं न मनागपि चुकोप; न वा च तं किमप्युवाच ।

## मांसलीला

वेलूरपूरे निवासं कुर्वतः श्रीदीक्षितस्य नियमः आसीत् यत्, स महत्येव प्रत्यूषे विविधपुष्पपरिमलपुरपूरितोपवनपरिवृते विकसत्कमलकुले विमलजले एकस्मिन् जलाशये स्नातुं द्वित्रैः शिष्यैः आनुगम्यमानोऽगच्छत्। ताताचार्येण चिन्तितं यद् कस्यचिद् पूत्युपासकस्य पिशाचसेवकस्य साहाय्येन तस्मिन् सरसि रक्तमांसमज्जामेदोभिस्तथा विकृतिरुत्पादनीया,

यथा दीक्षितः प्रभाते एव तद्ग्रसितो भूत्वा अपावनताम् अस्पृश्यतां च उपगत्य सर्वेषामुपेक्षापात्रः भवेत् इति। एवं विचार्यं स कस्यचित् द्रव्यवशीकृतस्य भूतोपासकस्य सहायतया तन्निर्मलं सरोघृणितकुष्ठरोगहेतुभूतदुर्गन्धिपूरितमांसमेदोभिः पूरयित्वा निशीथे एव दूषयामास।

इतश्च श्रीदीक्षितो ब्राह्ममुहूर्ते उत्थाय शौचात् निवृत्य स्वीयान् द्वित्रान् शिष्यान् आत्मना सह नीत्वा स्नानाय नित्यमिव तत्सरोवराभिमुखं प्राचलत्। सरसो निकटे गत्वा नासिकाकष्टदायकं चित्तोद्वेजकं तीव्रं दुर्गन्धम् आघ्राय विस्मयान्वितेन तेन तत्कारणान्वेषणाय स्वीया प्रान्तेवासिन उक्ताः । अथ यावदेव ते दीपिकामानीय पश्यन्ति , तावत्सर्वमेव तत्रत्यं स्थानं दूषितमदृश्यत । श्रीदीक्षितमहोदयः क्षणं ध्यायन् सर्वं कारणं विवेद । ततः श्रीदीक्षितः कस्यचिन्मन्त्रस्य जपम् अतितीव्रतया कर्तुमारेभे । तस्य परिणामोऽयमभवत् यद्भैरवाकारः कश्चिद् भूतराजः , सपदि प्रादुर्भूय तत्स्थानं यथापूर्वं विधाय कुपितश्च भूत्वा तथाविधैरेव घृणोत्पादकैः पदार्थजातैः सरोदूषकस (यथाविधैः सरो दूषितमासीत्)्य

अधमाचार्यस्य ताताचार्यस्य भवनं पूरयामास । तत्सहयोगिनः पिशाचोपासकस्य तु शरीरे कुष्ठरोगमेवोत्पादयामास ।

दीक्षितमहोदयः तत्स्थानं यथापूर्वं सद् निभाल्य स्नात्वा ध्यात्वा गृहं जगाम। प्रभाते ताताचार्यगेहदोषं निशम्य राजा कौतुकमापन्नः श्रीदीक्षितं पप्रच्छ ; सर्वं च रहस्यं विदित्वा श्रीदीक्षिते परमां भक्तिं ताताचार्यौ च विरक्तिं भेजे । ताताचार्यः भत्सयितुकामो भूपः श्रीदीक्षितेन एव निवारितः।

## नीलकण्ठशब्दस्यार्थः-

यथा यथा श्रीदीक्षितस्य यशोभानु वृद्धि व्रजन्नासीत्, तथा तथा ताताचार्यस्य मनः कुमुदं परिम्लायदासीत् । सोऽनारतं श्रीदीक्षितापमानाय एव प्रयतमान आसीत्। एकदा राजपरिषदि 'नीलकण्ठ'-शब्दस्य अर्थमादाय चर्चा प्रचलिता। तदा ताताचार्यौ नीलकण्ठशब्दस्य निन्दापरकमेव अनर्थमर्थं कर्तुं प्रवृतः । किन्तु श्रीदीक्षितो नेदं सोढं शशाक, तथा वास्तविकमर्थं श्रीशिवकर्तृक-विषपानकथां सन्दर्भपुरस्सरं निरूपयामास।

यथा हि समुद्रमथनावसरे समुत्पन्नेन हालाहलेन यदा सर्वं ब्रह्माण्डं - तदा विष्णुपुरोगैः देवैः प्रार्थितो भगवान् भूतेशः तत् ,भस्मीभवितुमारेभे समस्तमेव हालाहलमुत्थाय पपौ। तत्पानसमकालमेव जगज्जननी भवानी विचारयामास यद् यदि गरलमिदं भगवतः उदरे प्रवेक्ष्यतितर्हि तत्र , श्रीहरेश्चोदरे विद्यमाने सकले ,निवसन् श्रीहरिः दुःखितो भविष्यति एवं सति तु श्रीशिवस्य ;चराचरं ब्रह्माण्डं नूनं दुःखितं भविष्यत्येव इत्येवं विचार्यं गरलं पिबतः ;गरलपानं व्यर्थमेव भविष्यति ब्रह्माण्डनाशात् श्रीशिवस्य ग्रीवा तया तथा गृहीतागरलं यथा पीयमानं तद् , तत्रैव च ;गलविलावरोधात् उदराभिमुखं भवितुं न प्राभवत् ग्रीवायामजीर्यत। ग्रीवायामेव गरलस्थित्या तत्र नीलिमा अपि आजगाम। संज्ञां लब्धवान् 'नीली जातः कण्ठी यस्य स नीलकण्ठ इति' तेनैव भगवान् भूतभावनः। अन्यत्किमपि कारणं नास्ति। अतः श्रीशिवस्य ब्रह्माण्डरक्षणहेतुभूतत्वात् तन्नीलकण्ठत्वं भूषणमेव विभावनीयं न तु स्वहृदयकालिम्नः प्रभावाद् दुष्टधिया दूषणमिति साटोपं साधयामास श्रीदीक्षितः।

ताताचार्यः गरलपानेन एव शिवस्य तादृशमसाधारणं महिमानं साधयतो श्रीदीक्षितस्य वचः श्रुत्वा व्यङ्ग्यपूर्वकं श्रीदीक्षितं सतिरस्कारं कथयामास यद् ,'महाशय यतो हि गरलं पीत्वा न कोऽपि ,शिवेन गरलं न पीतं ! प्राणितुं शक्नोति । यदि च गरलपानेन एव भवतः श्रीशिवः विश्ववन्दनीयो भगवति श्रीशिवे ?तर्हि किं भवानपि गरलं पातुं शक्नोति ,जातोऽस्ति प्रक्षिप्यमाणं कलङ्कपङ्कम् अपाकर्तुकामेन श्रीदीक्षितेन गरलपानं स्वीकृतम् । श्रवणसमकालमेवं झटिति कुतश्चित् पूर्वत एव सज्जीकृत्य निहितं गरलमादाय श्रीदीक्षितसमक्षमानीय पानाय ताताचार्येण स सव्यङ्ग्यं प्रेरितः । इदं सर्वं ताताचार्यकुचक्रमालोक्य नरपतिः श्रीदीक्षितं तत्पानाद् वारयामास । परन्तु श्रीदीक्षितो नरपतिं समाश्वास्य श्रीमृत्युञ्जयं कालकूटपायिनं भवानीजानिं ध्यायं ध्यायम् -

**''अरिमित्रं विषं पथ्यं दुःखी च सुखशेवधिः।**

**अनुकूले जगन्नाथे विपरीते विपर्ययः॥''**

इति सूक्तिं च पठन् ताताचार्यानीतं तद् गरलं गङ्गासलिलमिव स्मयमानः पपौ। अस्मिन्नवसरे गरलानलोपशमाय श्रीदीक्षितो भवानीवल्लभ

प्रार्थयामास। तेन तदा या प्रार्थना कृता सा एव। , इति नाम्ना ख्यातिमागतवती अस्ति । 'शिवमहिमकलिकास्तुतिः' श्रीशिवमहिम्ना श्रीदीक्षितो मनागपि अस्वास्थ्यं न भेजे । भावविह्वलः सन् शिवं स्तुवन् श्रीदीक्षितः तदानीं सर्वेषां भूपादीनां जनानां साक्षात् श्रीशिवत्वेन श्रद्धापात्रः बभूव । सर्वैः राजपुरोगैः धिक्क्रियमाणस्ताताचार्यो भृशम् अन्तरात्मना वितप्तो विलज्जश्च बभूव ।

## वधप्रयासः

एकदा तु ताताचार्योण श्रीदीक्षितस्य वधस्य राजभवने एव प्रबन्धः कृतः । स सचिवाग्रणीस्तु आसीदेव। राजकीयमुद्रा अपि तमेव निकषा आसीत् । अतस्तेन राज्ञो हस्ताक्षरं स्वयमेव विधाय मुद्राङ्कितं च कृत्वा सेनापतये आदेशो लिखित्वा दत्तो यद् - "अद्य यामिन्यां श्रीदीक्षितो राजप्रमदाभवनं यदि प्रविशेत् तर्हि पशुमारं स मारणीयः" इति । सेनापतिः इमं राजादेशं पठित्वा अपि आदेशपालने स्वीयम् असामर्थ्यं निवेदयामास, किन्तु ताताचार्येण मुहुर्मुहुः राजादेशापरिहरणीयतां निरूप्य यथाकथञ्चित् स सज्जीकृतः एव । वराकः स विस्मयमानो विविधं च श्रीदीक्षितं विचिन्तयमानः कतिपयान् भटान् नीत्वा तदागमनवधप्रतीक्षापरो बभूव ।

इतश्च ताताचार्योण एको दूतः श्रीदीक्षितं निकषा प्रेषितः । तेन गत्वा करौ सम्पुटीकृत्य कथितं यद् एकेन परमावश्यकेन केनाप्यन्येन ! भगवन्' ;असमाधेयेन कार्येण विवशीभूतो राजा भवन्तं सम्प्रत्येव आह्वयन्नस्ति प्रथमं तु श्रीदीक्षितः असमये निशीथे राजाह्वाहनं 'कृपा क्रियतामिति । निशम्यशङ्कां चकार ! भद्र' स्वीकृत्य किन्तु राजनि वात्सल्यात् गमनं , इति कथयित्वा दूतं विसृज्य मार्गसहायं 'अहमनुपदमागच्छामि ;त्वं चल श्रीभगवन्तं रुद्रदेवं निध्याय तस्मिन् निबिडे तमसि तमेव स्वाभीष्टदेवं मार्गसहायं श्रीशिवं संस्मरन् चचाल । किन्तु यावदेव स राजभवनाङ्गणं प्राप्नोति तावदेव निशितासिधराः गृहीतकरवालाः सैनिका जिघांसया तदभिमुखं धावित्तुं प्रववृतिरे । तान् घातुकान् आलोक्य तेषां च चेष्टाः अवगत्य कोपकषायितनयनः श्रीदीक्षितो वक्रवीक्षणेन एव तान् स्तम्भयामास ।

ततस्तान् सैनिकान् ततत्प्रहारचेष्टाभिरेव स्तब्धीकृत्य सम्भ्रमपुरस्सरं श्रीदीक्षितो राजभवनं प्रविवेश । सहसा तस्मिन् निशीथे श्रीदीक्षितस्य आगमनं निशम्य भूमिपालः ससंभ्रमं प्रियां शय्यां च विहाय तं प्रणम्य तस्मिन् असमये अस्थाने च तदागमनकारणं सादरं पप्रच्छ । किन्तु

श्रीदीक्षितेन ध्यानदृशा ज्ञात्वापि आगमनकारणं तु किमपि नोक्तम्अपि तु ; यतो हि सम्प्रति ? त्वदीया कुशलिता सुरक्षितास्ति न वा ! पृष्टं यत् राजन् दुष्टदुश्चेष्टाभिः किमपि अशुभं घटितमस्ति । शक्तिशालिषु प्रबलाधिकारिषु इदम् उचितं ;अमात्येषु द्रढीयांसं विश्वासं निधाय वीतचिन्तो भवसि ,अथ साम्प्रतं तु शेष्व ;नास्तिअहमपि गच्छामि । एवं प्रभाते सर्वञ्चित् कथयिष्यामिश्रीशङ्करः सर्वविधं शङ्करिष्यति। ;

श्रीदीक्षितस्तु एतावद् उदीर्य राजवचनस्य प्रताक्षाम् अकृत्वा सत्वरम् एकाकी एव गतः किन्तु राजा निद्रां न लब्धवान् । ततः प्रातः समुत्थाय , यदा राज्ञा प्रहारोत्सुकाः सेनापतिसहिताः स्वीयाः सर्वे राजभवनरक्षकाः सैनिकाश्चित्रार्पिता इव पाषाणमया इव स्तब्धीभूताः लोचनगोचरीकृताः , तदा तु तस्य विस्मयस्य सीमा एव नावशिष्यत। झटिति स श्रीदीक्षितेन्द्रभवनमागत्य सर्वं निवेदयामास। तदा दयावारिधिः श्रीदीक्षितो भूपं समाश्वास्य तेन सहैव तत्र गत्वापुनः वात्सल्यपूर्णया दृशा तान् सर्वान् जडीभूतान् सैनिकान् तज्जीवनाशया विलोक्य उज्जीवयामास । पुनश्चेतनामागतः सेनापतिः बद्धाञ्जलिर्भूत्वा सैनिकैः सह श्रीदीक्षितस्य चरणयोः पतित्वा अपराधक्षमायाच्ञां चकार ।

सर्वञ्च ताताचायचेष्टितं राजानं श्रावयामास । श्रवणसमकालमेव प्रस्फुरिताधरो राजा ताताचार्यं घूर्तराजं मत्वा तं देशात् निष्कासयितुं मतिं चकार । किन्तु श्रीदीक्षितो नेदं समर्थयामास । स कथयामास यद् विषवृक्षोऽपि संवर्ध्य स्वयं ' कालिदासेन कथितमस्ति यद् ! राजन्' । अतः ताताचार्याय अवसरो देयः साधुताल 'छेत्तुमसाम्प्रतम्ःभहेतवे इति।किन्तु ,राजापि श्रीदीक्षितानुरोधं मन्यमानो यथापूर्वं व्यवहरन् ' निवस्तुं तथा महत्त्वपूणानि कार्याणि स्वयमेव ,ताताचार्यं धूर्तं मन्यमानो निर्वहन् श्रीदीक्षितं च सम्पूजयन् वसुमतीं शास्तुमारेभे ।

## स्वयं वधाय सज्जता

यदा श्रीदीक्षितहिंसार्थं स्वीकृतानि सर्वाणि साधनानि असफलानि बभूवुस्तदा ताताचार्येण स्वयमेव श्रीदीक्षितवधाय मतिरकारि । एकदा श्रीदीक्षितः स्वाभीष्टदेवताया मार्गसहायस्य महोत्सवावलोकनेन आत्मानं, आत्मनो नयनयुगलञ्च पावयितुकामो विरिञ्चिपुरं गतः । तस्मिन्नवसरे ताताचार्योऽपि कांश्चित् प्रहारपटून् घातुकान् आत्मना सह नीत्वा

श्रीदीक्षितजिघांसया एकस्मिन् घोरे कान्तारे पथि तस्य प्रत्यागमनप्रतीक्षापरायणो बभूव। यदा श्रीदीक्षितः मार्गसहायमहोत्सवं दृष्ट्वा शिविकामारूढः परावर्तमानः आसीत्, तदा ताताचार्यः सहचरैः सह शिविकावाहकान् भाययन् श्रीदीक्षितोपरि आक्रमणं चकार ।

रजन्यास्तुरीयो याम आसीत् । तस्मिन् निबिडे वृक्षावलीद्विगुणिते च तमसि तां विपत्तिमाकलय्य श्रीदीक्षितः मार्गसहायमेव सस्मार। एकतानचेतसा विहितेन स्तोत्रेण मार्गसहायः प्रीत्या स्वगणान् शिविकारक्षणाय तत्क्षणं प्राहिणोत्घोरगर्जनान्वितसौदामिनीचाक्यचिक् ,येन च तान् सर्वानेव लुण्ठकान् मूर्च्छयामास । एवं विलोक्य विगतशल्यो दीक्षिततेषां : जिघांसूनामुपरि विपत्पातमालोक्य दयया तान् सकरुणया दृशा विलोक्य वीतव्यथान् चकार ।

ताताचार्यः श्रीदीक्षितस्य एतादृशं प्रभावं दयाभावञ्च दर्शं दर्शं भृशं पश्चात्तापं गतःकरौ च सम् ,पुटीकृत्य तच्चरणयोः पपातसमस्तापराधानां ; कृते क्षमां प्रार्थयामास । तस्य चेतसो विद्वेषाग्निः श्रीदीक्षितस्य च

शमवारिणा सर्वथा शान्तिमागतः । श्रीदीक्षितोऽपि शुद्धभावेन प्रणमन्तं ताताचार्यं स्नेहदृशा विलोक्य मृदुभाषणेन तस्य हृदयात् लज्जाशल्यं निष्कासयामास ।श्रीचिन्नबोम्मभूपः ताताचार्यकत्तृकमात्मसमर्पणादिकमिदं सर्वं वृत्तं विदित्वा नितरां प्रसन्नो बभूवश्रीदीक्षिते च अपरिमितां भक्तिं ; बवन्ध।

## विरचितग्रन्थाः

श्रीमदप्पयदीक्षितेन विविधेषु विषयेषु विविधासु च शैलीषु नानाकाराः शराकाशेन्दवो ग्रन्थाः विरचिताः सन्ति । तेषां समेषां नामानीमानि सन्ति -

(१) वृत्तिवार्तिकम्,

(२) कुवलयानन्दः,

(३) चित्रमीमांसा

(४) यादवाभ्युदयव्याख्यानम्

(५-६) नामसंग्रहमाला, तदव्याख्या च

(७-८) वरदराजस्तवः, तदविवरणं च

(९) कृष्णध्यानपद्धतिः

(१०-११) दुर्गाचन्द्रकलास्तुतिः, तदविवरणं च

(१२-१३) आदित्यस्तोत्ररत्नं, तद्व्याख्या च

(१४) मयूखावली

(१५-१६) न्यायमुक्तावली तद्व्याख्या च

(१७-१८) नयमयूखमालिका, तद्व्याख्या च

(१९) मणिमालिका

(२०) नयमञ्जरी

(२१) सिद्धान्तलेशसंग्रहः

(२२) न्यायरक्षामणिः

(२३) परिमलः

(२४) शिवार्कमणिदीपिका

(२५-२६) रत्नत्रयपरीक्षा, तद्व्याख्या च

(२७) शिवाद्वैतनिर्णयः

(२८-२९) पञ्चरत्नस्तुतिः, तद्व्याख्या च

(३०-३१) शिखरिणीमाला, तद्व्याख्यात्मकः शिवतत्त्वविवेकः

(३२-३३) ब्रह्मतर्कस्तवः, तद्विवरणं च

(३४) शिवकर्णामृतम्

(३५-३६) शिवार्चनचन्द्रिका, बालचन्द्रिकानामिका च तद्व्याख्या

(३७-३८) विधिरसायनं, सुखोपयोजिनी नाम्नी तद्व्याख्या

(३९) चित्रपटः

(४०) उपक्रमपराक्रमः

(४१) वैयाकरणनक्षत्रवादावली

(४२) मीमांसानक्षत्रवादावली

(४३) वेदान्तनक्षत्रवादावली

(४४) रामानुजश्रृङ्गभङ्गः

(४५-४६) मध्वतन्त्रमुखमर्दनं तद्व्याख्यात्मकं मध्वमतविध्वंसनं च

(४७) अधिकरणकुञ्चिका,

(४८) वीरशैवम्

(४९) तप्तमुद्राविद्रावणम्

(५०) गङ्गाधराष्टकम्

(५१) भस्मवादावली

(५२) पादुकासहस्त्रव्याख्या

(५३-५४) रामायणतात्पर्यसंग्रहः, तद्व्याख्यानं च

(५५-५६) भारततात्पर्यसंग्रहः, तद्व्याख्यानं च

(५७-५८) शिवध्यानपद्धतिः, तद्व्याख्यानं च

(५९) शब्दप्रकाशः

(६०) शिवपूजाविधिः

(६१) भक्तिशतकम्

(६२)	हरिहरस्तुतिः

(६३)	दशकुमारचरितसंग्रहः

(६४)	प्राकृतचन्द्रिका

(६५)	निग्रहाष्टकम्

(६६)	आत्मार्पणस्तुतिः

(६७)	मानसोल्लासः

(६८)	श्रीविद्यातत्त्वविवरणम्

(६९)	हरिवंशसारचरितव्याख्या

(७०)	मार्गबन्धुचम्पूः

(७१)	मार्गबन्धुपञ्जररत्नम्

(७२)	तान्त्रिकमीमांसा

(७३)	अनुग्रहाष्टकम्

(७४)	अधिकरणमाला

(७५)	अधिकरणसारावली

(७६)　अमरकोशव्याख्या

(७७)　अरुणाचलेश्वरस्तुतिः

(७८)　कृष्णध्यानपद्धतिव्याख्या

(७९)　जयोल्लासनिधिः

(८०)　तत्त्वमुक्तावली

(८१)　तिङन्तशेषसंग्रहः

(८२)　धर्ममीमांसापरिभाषा

(८३-८४)　न्यायरत्नमाला, तद्व्याख्या च

(८५)　पञ्चस्वरवृत्तिः

(८६)　प्रबोधचन्द्रोदयटीका

(८७)　मतसारार्थसंग्रहः

(८८)　मार्गसहायस्तोत्रम्

(८९)　वसुमतीचित्रसेनविलासनाटकम्

(९०)　विष्णुतत्त्वरहस्यम्

(९१)　शान्तिस्तवः

(९२)　शिवपुराणतामसत्वखण्डनम्

(९३)　शैवकल्पद्रुमः

(९४)　सिद्धान्तरत्नाकरः

(९५)　स्तोत्ररत्नाकरः

(९६)　हंससंदेशटीका

(९७)　मार्गसहायलिङ्गस्तुतिः

(९८)　लक्षणरत्नावलीव्याख्या

(९९)　अपीतकुचाम्बास्तुतिः

(१००-१०१)　नयमणिमाला, तद्व्याख्या च

(१०२-१०३)　आनन्दलहरी, तद्व्याख्या च

(१०४)　शिवमहिमकालिकास्तुतिः

(१०५)　शिवमहिमव्याख्या

## ग्रन्थनिर्माणपरिस्थितयः

श्रीदीक्षितस्य समक्षम् एकैकशः एतादृश्यो विविधाः परिस्थितय एव समाजग्मुः याभिः प्रेरितेनानेन तत्तत्परिस्थितिसमाधानसमर्थाः सार्थाः ग्रन्था लेखनीया बभूवुः । प्रायेण एतदीयानां सर्वेषामेव ग्रन्थानां निर्माणे काचिन्न काचित् परिस्थितिरेव कारणं बभूव । विवादग्रस्तविषयस्य समाधानं तद्विषयविवेचकग्रन्थनिर्माणमुखेन एव श्रीदीक्षितः करोति स्म । अत एव तल्लिखितग्रन्थानां संख्या भूयसी जातास्ति।

## (कः)

श्रीदीक्षितस्य कनिष्ठपुत्री यदा प्रथमवारम् ऋतुमती बभूव तदा तया तस्यामवस्थायां शिवपूजायाः औचित्यम् अनौचित्यञ्च ज्ञातुं श्रीदीक्षितः पृष्टः। अनेन महोदयेन तदीयां निर्भरां शिवभक्तिम् आकलय्य तस्यै शिवपूजोपदेशो दत्तः । श्रुत्वा सा प्रसन्नेन मनसा श्रद्धया शिवमाराधयामास; तथा वार्तालापप्रसङ्गे सा पुत्री पित्रा सह जातमिमं वार्तालापं प्रसन्नता नवीनताभ्याञ्च वशीभूता सती ताताचार्यजायां श्रावयामास ताताचार्यजाया ;

च अश्रुतपूर्वाम् अनुपदिष्टपूर्वाम् इमां मासिकधर्म्मवतीविहितां शिवपूजां साश्चर्यं स्वपतिं निवेदयामास ।

सासूयेन ताताचार्येण साश्चर्येण राजकर्णयोः श्रीदीक्षितस्य अयमुपदेशः अधर्मोपदेशत्वेन निवेदितः । यदा राजापि शङ्कमानो द्वितीयदिने सभायां प्रकारान्तरेण श्रीदीक्षितं शिवपूजाभेदान् पप्रच्छतदा श्रीदीक्षितः , राजमनोभावं विज्ञाय महता विस्तरेण साधयामास यद् कापि नाम यदि तदीयं चेतः ;मनुष्यः कस्यामपि दशायां स्याद् ,परिस्थितिः स्यात् पूजाफलञ्च लभते । यतो ;तर्हि स पूजाधिकारी अस्ति ,भक्तिप्रवणं विद्यते तस्मै बाह्याडम्बरं न रोचते इति । राजा ;हि ईशः अन्तर्वृत्तिरसिको विद्यते इदमुत्तरं निशम्य परमां प्रीतिमापन्नः श्रीदीक्षितम् इमान् विचारान् ग्रन्थीकतुं शिवार्चनचन्' प्रार्थयामास । श्रीदीक्षितोऽपि तत्प्रार्थनयाद्रिकानामाकं ' 'बालचन्द्रिका' तदीयां ,ग्रन्थं-नामिकां व्याख्यां रचयामास ।

(खः)

‘शिवार्कमणिदीपिका'याः निर्माणकारणम् अस्ति यत्, रात्री चिन्नबोम्मभूपालाकारो भगवान् शङ्कर एव एतन्निर्माणाय आदेशं दत्तवानासीत् श्रीदीक्षिताय । प्रातः सभायां चिन्नबोम्मेनापि प्रार्थना कृतासीत् । अत एव श्रीदीक्षितेन ‘शिवार्कमणिदीपिका' अलेखिः इति मन्यते।

**(गः)**

श्रूयते लिखितं च दृश्यते यद्प्रमादावस्थायां मम ' एकदा श्रीदीक्षितेन , स्वचित्तपरीक्षायै स्वोन्मादाय 'चित्तं श्रीशङ्कराभिमुखं गच्छति न वेति धत्तूररसः पीतः । पीत्वा स उन्मत्तो जातः । किन्तु तदवस्थायामपि स श्रीभगवच्छङ्करस्तवे एव लीनमना बभूव । तस्याम् अवस्थायां ये पञ्चाशत्रत् श्लोकाः तन्मुखाद् विनिर्गताः अथवा 'उन्मत्तपञ्चाशत्' त एव , इति संज्ञां लेभिरे । 'आत्मार्पणस्तुतिः‘

**(घः)**

निग्रहाष्टकमिति नामकं स्तोत्रमपि ताताचार्यप्रेरितानां दुष्टानां घातुकानां निरोधाय एव भीतभीतेन मनसा श्रीदीक्षितेन तत्क्षणमेव निर्मीय

पठितमासीत् । तत्कालरचितेनानेन स्तोत्रेण प्रीतो मार्गसहायो भगवान् तं ररक्षापि सत्वरम् ।

## अन्तिमदिनानि

श्रीदीक्षितमहोदस्य हृदये तीर्थस्थानावलोकनोत्कण्ठा सदैव बलवती तिष्ठति स्म । तेन दक्षिणभारते विलसितानि सर्वाण्येव तीर्थस्थानानि लोचनगोचरीकृतान्यासन्। उत्तरभारतस्य एव नैव, अपि तु संसारस्य पुण्यतमां धन्यतनां भक्तजनमनोरमां सर्वविधश्रेयसीं महसां महीयसीं यशसा गरीयसीं पुरीं वाराणसीं प्रेक्षितुं प्रतीक्षमाणः एवायामासीद् यत् तदानीमेव एतदीया द्राक्षारसमुचो वाचो निजश्रवणातिथीचिकीर्षूणां वाराणसेयमनीषिणां समादरान्वितं काशीदर्शननिमन्त्रणमासाद्य श्रीमदन्नपूर्णाविश्वनाथयोः अपारमनुग्रहं मन्यमानोऽयं जीवनस्य उपान्त्यकालिकवर्षेषु काशीमपि नयनविषयीचकार ।

वाराणस्यामयं महोदयः सर्वत्र श्रद्धामादरं च लभमानो भवानीवल्लभपाणिपल्लवच्छायालिप्सुरेकतानमनाः भवं भावयन् पूजयन्

दिनानि याष्पयन्नासीत् । समायाता महाशिवरात्रिः । तस्यां शिवरात्रौ शिवसमीपे श्रद्धोत्तुङ्गतरङ्गायितहृदयोऽयं शिवं स्तुवन्नासीत्यत्तदानीमेव ; निशीथे निमील्यमाननयनेषु इतरजनेषु जागरूकाय भक्तराजाय अस्मै श्रीभवानीसहितो भूतभावनो विश्वनाथो दर्शनं ददौ। पुलकायमानशरीरं निरन्तरप्रेमाश्रुपूरेण गद्गदवचसमेन सन्तोषयन्नुवाच विश्वनाथो यद् , 'वत्स त्वदीयमुद्देश्यं पूर्णतां गतमस्ति। सर्वे एव शिवद्रुहः शिवमाहात्म्यं ! अथ त्वं स्वग्राममेव गत्वा तत् ;स्वीकृतवन्तः सन्तिर कञ्चित् समयमध्युष्य चिदम्बरे श्रीनटराजतेजसि एव विलीनो भवइत्येवञ्चाभाष्य ' ध्यानगम्योऽभवच्छिवः । श्रीदीक्षितोऽपि तदाज्ञां पुष्पमालामिव शिरसा धारयित्वा परदिने तत्रत्यं पण्डितमण्डलमापृच्छ्य सस्नेहं सवियोगदुःखं कथङ्कथमपि च तैः विसृष्टः काशीतः प्रतस्थे।

## निर्वाणम्

वाराणसीतो मनसि विश्वनाथनिदेशमाधाय श्रीदीक्षितो विरिचिपुरीमेव समाजगाम । तत्र चिन्नबोम्मभूपेन तीर्थयात्रातो निवृत्तस्यास्य भव्यं स्वागतं व्यधायि; तदीयेन च दर्शनेन समस्ततीर्थयात्राफललाभोऽप्यन्वभावि। ततो

विरिञ्चिपुरीतो दीक्षितमहाभागः, चिन्नबोम्मप्रभृतिभिः राजभिरनुगतो बेलूरपुरम् आजगाम । तत्र किञ्चित् कालम् उषित्वा पुनः स स्वग्रामम् अडयप्पलं वव्राज । स्वीये ग्रामे चिन्नबोम्मप्रभृतिभिः अशेषैः राजभिः पूजितपादः स स्वायुषोऽन्तिमानि दश वर्षाणि यापयामास । एतस्मिन् व्यतिकरे स सदैव धर्मोपदेशदाने एव व्यापृतो बभूव । सदैव धर्मस्य रहस्योद्घाटने एव लग्नस्तस्थौ । तदनन्तरं स्वीयमन्तिमं समयमवेक्ष्य एकस्मिन्ननेहसि श्रीचिदम्बरं संसेवितुं सम्प्रतस्थे ।

तत्र श्रीचिदम्बरमन्दिरे तत्रत्यैः सर्वैः एव अर्चकैः सम्मानितोऽयं मखीन्द्रः ज्ञानप्रकाशसंज्ञकं शान्तमाश्रमपदमध्युवास । तत्र च प्रत्यहं शिवगङ्गापाथसि स्नात्वा त्रैकालिकीं सन्ध्यां समुपास्य श्रीनटराजविग्रहावलोकनावलीनमना भवितुमारेभे ।

**मौलौ गङ्गाशशाङ्कौ करचरणतले कोमलाङ्गा भुजङ्गाः,**

**वामे भागे दयार्द्रा हिमगिरितनया चन्दनं सर्वगात्रे।**

**इत्थं शीतं प्रभूतं तव कनकसभानाथ वोढुं क्व शक्तिः,**

## चित्ते निर्वेदतप्ते यदि भवति न ते नित्यवासो मदीये ।।।

श्रीदीक्षितोऽन्तिमे समये योगलीनो बभूव । क्रमेण योगस्य पराकाष्ठामुपेयुषः समाधिनिष्ठस्य मोक्षावाप्तिसुसज्जितस्य श्रीदीक्षितस्य समीपे तदीयाः पुत्रपौत्रादयः परिवारजना इतरे च तदीया भक्ताः तदाशयं समीहमाना आगत्य तस्थुः ।

निर्वाणवेलायां श्रीदीक्षितस्य विशिष्टकृपाभिनिवेशः स्वीयानुजस्य आच्चानदीक्षितस्य पौत्रेष्वन्यतमे नीलकण्ठनाम्नि बालके अभूत् । एतस्य कारणमिदमासीत् यद्एतस्यानुजः आच्चानदीक्षितस्तु एतस्य समक्षमेव , अपि तु ,कालधर्मं गतवानासीत् । न केवलम् एतावदेव आच्चानदीक्षितस्य नारायणाध्वरिनामा सुतोऽपियस्य पञ्चपुत्रा अपि , सपत्नीकः श्रीदीक्षितेषु पश्यत्सु एव कालधर्मं ,जातवन्त आसन् पितामहवियुक्ताः ते सर्वे एव आस्माकीनस्य -अतः पितृ ,प्राप्तवानासीत् चरितनायकस्य श्रीदीक्षितस्य प्रिया अभूवन् । किन्तु तेषु नीलकण्ठनामनि

बालके तु तदीया विशिष्टैव कृपासीत्। यतो हि सोऽतीव विनीतो विहितसाङ्गवेदाध्ययनो विलक्षणभक्तश्चासीत् । अत एव श्रीदीक्षितमहोदयो निजान्तिमे समये तमेव अन्तिके समाहूय तदीयधैर्य-— तदानीं तयोरेवमभूदालापः ;वैदुष्यजिज्ञासया तं प्रष्टुमारेभे

श्रीदीक्षितः आपदि किं -करणीयम्?

स सविनयं प्रत्युवाच स्मरणीयं चरणयुगलमम्बायाः। —

श्रीदीक्षितः ? तत्स्मरणं किं करोति -

स पुनः सविनयं सादरं प्रत्युवाचब्रह्मादीनपि किङ्करीकरोति। —

एवंविधानि वैदुष्यपूर्णानि तदीयानि प्रतिवचांसि श्रुत्वा परमप्रीतः श्रीदीक्षितः तम् आशीराशिभिः अभिवर्धयामासस्वपुत्रेभ्यश्च तदीयामभिभावकतां ; भूरिशो भावुकतापुरस्सरं समर्पयामास।

तदानीं तदीयां निर्वाणयात्रां निशम्य व्याकुलायमानमानसा ये जना राजानश्च समागता आसन्तेभ्यः सर्वेभ्य एव शुभाशिषो वितीर्य तेषां , समेषां प्रवर्धमानं सान्द्रं दुःखध्वान्तमपाकर्तुं सपरमतत्त्वोपदेशरूपं भासुरमात्मज्योतिबोधं प्रकाशयामास । एतस्मिन्नेव व्यतिकरे आत्मनि स्फुरन्तमात्मानं समनुभवन् संजातश्रीकाशीविश्वनाथवचनस्मृतिः श्रीदीक्षितो नैजं महानिर्वाणकालम् अनुभूय विहगो नीडमिव पुण्यतमं ब्रह्मरन्ध्रं प्रवेष्टुकामो बभूव । तदीयं तमन्तिमं कालम् आकलय्य तदीयाः त्रयोऽपि श्रीनीलकण्ठादयः तनूजाः प्रेष्ठपितृविरहसंभावनासमाकुलितहृदयाः अत एव अपगतधैर्याः !तात', किमनुभूयमानमस्ति ? ''तात , इति साम्रेडं सरभसं ससाध्वसं समनोवेदनं तं '? किमनुभूयमानमस्ति प्रष्टुमारेभिरे । तेषां स्वतनुजनुषां तथाविधां तां व्याकुलत ामालोक्य तेषां बुद्धौ जागतिकसम्बन्धतत्त्वभङ्गुरतां परब्रह्मतत्त्वपरमार्थताञ्च झटिति

समासेन च समुद्बोधितवतइमे ,श्रीदीक्षितस्य वाचि परब्रह्ममन्त्रा इव : - शब्दाः प्रादुर्बभूवः

**तुर्यातीतस्त्रिगुणरहितो नामरूपादिदूरः,**

**शुद्धाद्वैतामृतजलनिधिप्रोद्यवानन्दसान्द्रः।**

**ब्रह्मैवाहं मुकुरहृदयस्स्वच्छचेतास्सुनित्यं,**

**मूर्तस्साक्षी रविरिव सदा भामि पूर्णश्चिदात्मा॥**

**चिदम्बरमिदं पुरं प्रथितमेव पुण्यस्थलं,**

**सुताश्च विनयोज्ज्वलाः सुकृतयश्च काश्चित्कृताः।**

**वयांसि मम सप्ततेरुपरि नैव भोगे स्पृहा,**

**न किञ्चिदहमर्थये शिवपदं दिदृक्षे परम्॥**

एतदनन्तरन्तु -

आभाति हाटकसभानटपादपद्म ,

ज्योतिर्मयो मनसि मे तरुणारुणोऽयम्॥

इत्येतावदेव श्लोकार्धमुदीर्य सपद्येव सरस्वतीचुम्बितब्रह्मरन्ध्रः सौदामिनीसङ्गतबलाहक इव शोभमानो भासुरः श्रीदीक्षितः स्वाराध्यदेवतायाः श्रीचन्द्रशेखरस्य नटराजस्य नीराजनवेलायां चैत्रपूर्णिमायां प्रशान्तभावाभिनिवेशया निर्निमेषया दृशा श्रीचिदम्बरं नटराजं वीक्षमाणस्तस्यैव तुरीये तेजसि संविलीनो बभूव ।

तदीयं तदिदं महद् विलक्षणं ब्रह्मनिर्वाणमक्षिलक्ष्यीकृत्य तत्र समवेताः सर्वे एव भक्तजनाः इति घोषयन्तोऽपि दीनाः साश्रुनयनाः 'हर हर महादेव' निराशाश्च बभूवुः । श्रीदीक्षितेन्द्रेण अन्तिमे क्षणे उच्चारितस्य श्लोकार्धस्य पूर्तिं कुर्वन् तत्सूनुः श्रीनीलकण्ठः सदीर्घोच्छ्वासमाह -

**नूनं जरामरणघोरपिशाचकीर्णा**

**संसारमोहरजनी विरतिं प्रयाता।।**

ततः स्तदीयाः श्रीनीलकण्ठादयस्तनूजाः श्रीपितृचरणस्य श्रीदीक्षितेन्द्रस्य सर्वाण्येव और्ध्वदैहिककृत्यानि सविधि चक्रुः।

**ॐ शिवाय नमः**